पृष्ठ
तेषांप्रमाणानि
६ क्षेत्रसन्निधानेकृत्यम्
६ पंचलिंगदर्शनेस्तोत्रम्
६ हनूमद्दर्शनम्
७ ज्योतिर्लिंगदर्शनं
७ लेखाऽवलोकनेविचारः
७ आचार्याऽवश्यकताविचारः

तृतीयप्रकरणं

८ त्र्यंबकेश्वरमहिमविवरणं
८ कुशावर्ततीर्थविवरणम्
८ गोदावरीविवरणम्
८ त्रिसंध्याक्षेत्रविवरणम्
पृष्ठ
९ त्रिकंटकविराजितंतस्यशास्त्रार्थः
१० कुशावर्तपदस्यार्थः
१० गोदापदस्यार्थः
१० तीर्थराजप्रमाणं
११ गोदामाहात्म्यकथनम्
११ गोदावरीजलगुणाः
११ गोदाअपूर्वरसायनम्
१२ पितृतीर्थशब्देनगयैवोक्ता
१२ रुद्रगया-रुद्रक्षेत्रं
१२ एकोत्तरशतकुलोध्दारसंख्याप्रमाणानि

अथचतुर्थप्रकरणं

## ॥ श्रीगोदायात्राविवेकादर्श अनुक्रमणिका ॥

आरम्यते.


पृष्ठ अथप्रथमप्रकरणं

१ मंगलाचरणं

१ आधारभूतवाक्यानि

१ तेषांहेतवःअभिप्रायश्च

१ तस्यसंशयनिवृत्तिः

१ मूलस्थानमहिमविवरणं

द्वितीयप्रकरणं

३ यात्राऽगमनविचारः

३ अस्तादेरपवादः

३ गमनेमहूर्ताः

पृष्ठ

४ गमनेचंद्रबलं

४ तत्रचंद्रावस्थाविचारः

४ सन्मुखचंद्रमाफलम्

५ गंतुकामस्यास्थितिः

५ गृहकृत्यानि-वृद्धिश्राद्धंच

५ यात्राऽधिकारलक्षणानि

५ वाहनविचारः

५ नदीपारकृत्यं

६ मध्येगोदाप्राप्तौमुंडनादिनकार्यं

| पृ० | | पृ० | |
|---|---|---|---|
| २१ | तेषांशास्त्रार्थाश्चविद्वद्भिर्ज्ञेयं | २२ | कालविचारश्च |
| २१ | श्राद्धशब्दस्यार्थः | २२ | श्राध्येसूर्यास्तविचारः |
| २१ | श्राद्धस्यप्रयोजनम् | २२ | श्राध्येदेवतानियमः |
| २१ | श्राद्धेस्थलप्रशस्तिः | २३ | तीर्थश्राद्धेवर्ज्याः |
| २१ | परगृहश्राद्धविचारः | २३ | श्राध्येब्राह्मणाऽवश्यकता |
| २१ | तीर्थप्राप्तिदिने—वार्षिकतैर्थिकश्राद्धविचारः | २३ | सुवासिनीविचारः |
| | | २३ | पिंडविचारः |
| २१ | श्राध्यनकृतेदोषाःप्र० | २४ | पिंडद्रव्याणि |
| २२ | श्राध्यप्रकाराः | २४ | श्राध्येगोधूमपिष्टवर्जं |
| २२ | विधवाकर्तृकश्राध्यविचारः | २४ | श्राध्यमहिमा १०१कुलोत्धारश्च |
| २२ | जीवत्पितृकश्राध्यविषयः | | इतिगो० द्वितीयदिनकृत्यं |
| २२ | श्राध्येब्राह्मणविषयः | | अथमष्टमप्रकरणं |


॥२॥

पृष्ठ
१३ तीर्थविधिःयात्राप्रकरणं
१३ मुंडनविचारः
१४ नकृतेदोषाःप्रमाणानि
१४ क्षौरेजीवत्पितृकविषयं
१४ विधवानामपिमुंडनविचारः
१५ क्षौरस्यशास्त्रार्थः
१७ अत्रैवमुंडनश्राद्धादिकार्येअवश्य हेतवःप्रमाणानिचतेषांविद्वद्भिर्ज्ञात व्यंतत्र
१७ केशरक्षणेशास्त्रार्थः
१८ मंत्रस्नानविधिः
१८ प्रायश्चित्तस्यलक्षणम्।

पृष्ठ
१९ नदीस्नानेमहासंकल्पःअतएवहेमाद्रिप्रयोगश्रवणम्
१८ ब्रह्मदंडविचारःसएव
१९ समस्तब्रा॰ दक्षिणोक्ता
१९ समंतात्सुदेवतादर्शनंपूजनंच
१९ तर्पणप्रकारः
२० उपवासविचारः
२० तस्यशास्त्रार्थः
२० उपवासप्रतिनिधिःइतिप्रथमदिनेकृत्यं

अथपंचमप्रकरणं

२० तीर्थश्राद्धावश्यकता.

पृष्ठं

अथदशमप्रकरणं

४१ १ नारायणबलिविधिः
४४ २ पालाशविधिःपर्णशरश्च
४६ ३ नागबलीविवरणं

एकादशप्रकरणं

४७ ब्रह्मगिरिप्रदक्षिणाविधिः
४८ तस्याःप्रकाराःकथ्यंते
४८ पंचदिनक्रमःविधिःतन्मध्ये
प्रथमदिनकृत्यं
५० द्वितीयदिनकृत्यं
५३ तृतीयदिनकृत्यं
५५ चतुर्थदिनकृत्यं

पृष्ठं
५५ पंचमदिनकृत्यं
५६ अथत्रिदिनप्रदक्षणाविधिः
५६ एकाहप्रदक्षणाविधिः
५७ तेषांमध्येमुख्यमुख्यतीर्थानिकथ्यंते

द्वादशप्रकरणं

५७ सिंहस्थमहिमाविवरणं
५८ ध्वजारोपणं
५९ सिंहस्थस्नानफलं
६० गोपूजनविधिः
६१ गोप्रार्थनामंत्राः
६२ अथगोदानमंत्रः
६३ सौभाग्यप्राप्तिकामवायनदानं

पृष्ठ
२५ पंचतीर्थविवरणम्
१ गंगाद्वारं–वराहतीर्थंतेषांचरित्रंच
कारिकाक्रमणेकुःपाठतस्यशास्त्रार्थः
२ बिल्वतीर्थमहिमानं
३ नीलगंगा––नीलांबाकथानकंच
४ कणखलतीर्थप्रकरणं
५ कुशावर्तपंचमतीर्थविवरणम्
इतिगोदा० ३कृत्य
अथसप्तमप्रकरणं
३१ अष्टतीर्थविवरणं
१ बल्लाळतीर्थ–करटकथानकंच
३२ २वाराणशीतीर्थं

पृष्ठ
३ मणिकर्णिकाचरित्रंच
३२ ४ गंगालयाख्यानम्
३३ ५ रामलक्ष्मणतीर्थेतिहासः
३३ ६ शालितीर्थमाहात्म्यं.
३३ ७ इंद्रतीर्थविवरणं
३४ ८ कांचनतीर्थमाहात्म्यं
३५ ९ अहल्यासंगमाख्यानंइति
चतुर्थदिनकृत्यं
अथअष्टमप्रकरणं
३६ नित्ययात्राविधिः
अथनवमप्रकरणं
३७ त्रिपिंडीविधानकं

पृष्ठ
६३ घृतकुंभदानविधिः
६३ पुस्तकदानम्
६४ एकवस्त्रीविधानकं
६५ अथगोदोत्पत्तिः--संख्याप्रमाणम्
त्रयोदशप्रकरणं
६६ दशहराविधिः
६६ दशपापानि
६७ तस्यशास्त्रार्थः
६७ तत्रसंक्षिप्तप्रयोगः
६९ आर्तिक्यं
७० अथगंगास्तोत्रं

पृष्ठ
७१ प्रक्षाल्यपूजनाविधि
७२ गोदाप्रार्थनास्तोत्रं
चतुर्दशप्रकरणम्
७२ महापूजाविधानं
७३ रुद्रैकादशनीप्रकारः
७५ आर्तिक्यं (त्र्यंबकेशस्य
७६ लिंगार्चनफलं
७७ महादानानि
७७ रुद्राभिषेकफलं

करोतिमुंडनंश्राद्धंरौरवंचाधिगच्छति ॥ ९ ॥ कुशावर्तेनरस्नात्वाश्राद्धंकृत्वा
विधानतः ॥ तृप्यंतिपितरस्तस्य विष्णुसायुज्यमाप्नुयात् ॥ १० ॥ हिरण्यव
स्त्रदानंचगोदानंरौप्यमेवच ॥ कुशावर्तेनरोदद्यात्तस्यश्रीरचलाभवेत् ॥ ११ ॥
त्रिकंटकेशोभमानंत्र्यंबकंनामनामतः॥तत्रतीर्थंकुशावर्तंत्रिषुलोकेषुदुर्लभम्॥ १२
मात्स्ये ॥ त्र्यंबकेचाब्जकेचैवगोदासागरसंगमे ॥ सर्वत्रसुलभागोदात्रिपुस्था
नेषुदुर्लभा ॥ १३ ॥ उत्पन्नागौतमीयत्रतत्रश्रेष्ठतमास्मृता ॥ सर्वेभ्योप्यधि
कानित्यंविशेषात्सिंहगेगुरौ ॥ १४ ॥ गौतमीतीरसंस्थानांमूलस्थानंविशिष्य
ते ॥ शिवपुराणे ॥ त्रिपुरासुरपीडितदेवान्प्रतिशंकरोक्तिः ॥ १५ ॥ गोदा
वरींसमायांतुमूलस्थानेममाज्ञया ॥ सिंहस्थेदेहधारिण्योदेवतास्तत्रयांतिहि
॥ १६ ॥ तस्मात्तत्र्यंबकक्षेत्रंसर्वेभ्योप्यधिकंस्मृतम् ॥ सर्वत्रसमभूतैवत्र्यंबके ॥ १ ॥
प्यधिकामता ॥ १७ ॥ सर्वकामप्रदाचैवनित्यंवेदेषुगीयते ॥ उत्पन्नागौतमीय
त्रयत्राहंत्र्यंबकोगिरिः ॥ १८ ॥ यत्रतीर्थंकुशावर्तंतस्मान्नातःपरंगुह ॥ १९ ॥

श्रीमहागणपतयेनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ अथगोदाया
त्राविवेकादर्शप्रारभ्यते ॥ विघ्नेशंप्रणिपत्यादौत्र्यंबकेशंचगौतमीं ॥ गोदायात्रा
विवेकाख्योऽदर्शोयंक्रियतेऽधुना ॥ १ ॥ नानानिबंधानवलोक्ययत्नात्श्रुतिप्रमा
णानितथास्मृतिश्च ॥ सत्याद्रिकाशीशकलानिपाद्मस्कंदादिवाक्यानिलिखा
मिचात्र ॥ २ ॥ वेदस्मृतिवाक्यचयैर्गोदायात्राविधिःपुराकथितः ॥ क्रियतेकि
मितिनवीनोगोदायात्राविवेचनाऽदर्शः ॥ ३ ॥ यात्रिकान्वंचयंत्येतेनाशिकस्था
द्विजातयः ॥ क्षौरंविधेयमत्रैवनक्षौरंत्र्यंबकेभवेत् ॥ ४ ॥ क्षौरिणांयात्रिकाणां
चलिंगेकेशाःपतंतिहि ॥ कथयित्वैवमेवंतेयात्रिकान्लुंठयंतिच ॥ ५ ॥ एतद
र्थंनवीनाश्चकृतास्तैरेवकारिकाः ॥ तासांविलोकनेनैवयात्रिकाःसंशयंतिच ॥
६ ॥ अतःसंशयनाशार्थंश्रुतिस्मृतिपुराणजः ॥ मूलभूतोवाक्यचयःसर्वोप्यत्र
प्रकाश्यते ॥ ७ ॥ स्कांदे ॥ मूलमध्याऽवसानेषुगोदाऽलभ्याकलौयुगे ॥ मुंडनं
तत्रकुर्याद्वैतीर्थश्राद्धंविशेषतः ॥ ८ ॥ प्रमादाद्योनरोमूलंहित्वान्यत्रविशेषभाक्॥

म् ॥ ३० ॥ तीर्थंत्र्यंबकमासाद्यकोनमुक्तिमुपेयिवान् ॥ तीर्थक्षेत्रंगिरिर्देवोयत्तत्
त्र्यंबकसंज्ञितं ॥ ३१ ॥ नशिवस्त्वपरोलोकेनगंगासदृशीनदी ॥ नत्र्यंबकसमं
तीर्थंक्वापिब्रह्मांडगोलके ॥ ३२ ॥ अस्यंगोजीवदानात्वंगोदेतिख्यातिमप्यासि
॥ ३३ ॥ पाद्मे ॥ गोशब्दोदृष्टिवाचीस्यात्ज्ञानदृष्टिप्रदायकः ॥ गौतमोसर्व
मु.निभिर्गोदेतिपरिकीर्तितः ॥ ३४ ॥ अतःसिंहस्थितेजीवेगोदापरमदुर्लभा ॥
सर्वत्रैवमहाराजत्र्यंबकेतुविशेषतः ॥ ३५ ॥ श्रीरामंप्रतिकाश्यपोक्तिः ॥ सिंह
स्थितेसुरगुरौदुर्लभंगौतमीजलम् ॥ यत्रकुत्रापिराजेंद्रकुशावर्तेविशेषतः ॥३६॥
यस्तत्रकुरुतेश्राद्धंतर्पणंब्रम्हभोजनं ॥ कपिलादानसंयुक्तंतस्यपुण्यमनंतकम्
॥ ३७ ॥ अन्यच्च ॥ सिंहस्थितेसुरगुरौत्र्यंबकंयस्तुपश्यति ॥ नापुत्रीनाधनी
रोगीसप्तजन्मसुजायते ॥ ३८ ॥ कुशावर्तेचयस्नानंश्राद्धंचकुरुतेनरः ॥ सप्तज
न्मसुदौर्भाग्यंभयंतस्यनजायते ॥ ३९ ॥ त्र्यंबकेत्र्यंबकंतीर्थंलिंगंत्र्यंबकसंज्ञित
म् ॥ त्र्यंबकाद्रिस्त्र्यंबकश्चपंचगुह्यानियोगिनां ॥ ४० ॥ तस्मात्त्र्यंबकएवैषाद्

७

१. गौतमस्य.

निर्णयसिंधौ ॥ सह्याद्रेश्चोद्भवोयत्रयत्रगोदावरीनदी ॥ कृत्स्नायांहिपृथिव्यां
तुसप्रदेशोतिपावनः ॥ २० ॥ सह्यस्यप्रथमोमूर्धाब्रह्माद्रिरितिविश्रुतः ॥ यत्र
गोदासमुद्भूतासर्वपापप्रणाशिनी ॥ २१ ॥ दृश्यतेसौगिरिरितिवस्तुतोनागिरि
स्त्वयम् ॥ ब्रम्हणसिद्धिदातृत्वात्ब्रम्हविद्याप्रवर्तनात् ॥ २२ ॥ ब्रम्हस्फुर्ति
प्रभावाच्चततोब्रम्हगिरिस्त्विति ॥ २३ ॥ त्रयाणांगुणदेवानांनयनात्त्र्यंबका
भिधः ॥ त्रिमुर्तिमुख्यभूतत्वात्त्रिमूर्तत्वाच्चत्र्यंबकः ॥ २४ ॥ त्र्यंबकोमृत्यु
भीतानाममरत्वेककारणम् ॥ नकैलासपरश्रेयान्नमेरुर्नहिमालयः ॥ २५ ॥ न
काशीनपरंक्षेत्रमूयथाब्रम्हगिरिप्रियः ॥ अत्राहंप्रिययासार्धंकल्पकोटिशतेष्वपि
॥ २६ ॥ वसामिसततंस्कंदलोकानांहितकाम्यया ॥ सर्वतीर्थमयीगोदासर्व
देवमयःशिवः ॥२७॥ उभयात्मकमेतास्द्विकुशावर्तमतोऽधिकम् ॥ २८ ॥ कुनाम्ना
पार्थिवीवृत्तिस्तांतनूकुरुतेतुयः ॥ बोधस्तमावर्तयेद्यत्कुशावर्तमतोविदुः ॥ २९ ॥
त्र्यंबकक्षेत्रराजोयमूत्र्यंबकोयत्रशैलराट् ॥ त्र्यंबकाख्यंयत्रलिंगंतत्रसर्वंप्रतिष्ठित

8

श्रीविघ्नराजायनमः ॥ अथयात्रागमनविचारः ॥ श्रीगोदायात्रायांअस्तादेरप
वदाः ॥ त्रिस्थलीसेतौवायवीये ॥ गोदावर्यांगयायांचश्रीशैलेगृहणद्वये ॥ सु
रासुरगुरुणांचमौढ्यदोषोनविद्यते ॥ १ ॥ तत्रलल्लः ॥ उपप्लवेसीतलभानुभा
न्वोरर्धोदयेवैकपिलाख्यषष्ठ्यां॥सुरासुरेज्यास्तमयेपितीर्थयात्राविधिःसंक्रमणेच
शस्तः ॥ २ ॥ कालतत्वविवेकग्रंथे ॥ मलमासःसिंहगुरुरस्तश्चगुरुशुक्रयोः ॥
गोदायात्राविधावेतेनदोषजनकाःकिल ॥ ३ ॥ त्रिस्थलीसेतौ ॥ अधिमासेच
जन्मर्क्षेअस्तेचगुरुशुक्रयोः ॥ तीर्थयात्रानकर्तव्यागयागोदावरींविना ॥ ४ ॥
पुष्करादिषुतीर्थेषुगंगाद्यासुसरित्सुच ॥ सर्वेविधिनिषेधास्युःगयांगोदावरींसृते
॥ ५ ॥ निर्णयसिंधौ ॥ गुरुभार्गवयोर्मौढ्येपौषमासेमलिम्लुन्वे ॥ नातीतःपितृ
मेधस्यात्गयांगोदावरींविना ॥ ६ ॥ ॥ इतिअस्तादिविचारः ॥ अथग
गमनेमुहूर्ताः ॥ ज्योतिःसारे ॥ हस्तेंदुमैत्रश्रवणाश्विनीष्वपौष्णश्रविष्टाचपु ॥ ३ ॥
नर्वसुश्च ॥ प्रोक्तानिधिष्ण्यानिनवप्रयाणेत्यक्तात्रिपंचादिनसप्ततारा ॥ ७ ॥

ल्भासरितांवरा ॥ अब्जकेसिंधूसंगेचसर्वत्रसुलभापिहि ॥ ४१ ॥ समुद्रपर्वत
द्वीपतरुगुल्मलतादिभिः ॥ नभारुयाभुवस्ताहक्त्र्यंबकाऽभजतोयथा ॥ ४२॥
एवंस्कंदंप्रतिशंकरोक्तिः ॥ त्र्यंबकादपिसत्तीर्थमस्तिमुक्तिप्रदंपरं ॥ इतियेषां
मतिस्तेवैचांडालाब्रह्मजाऽतयः ॥ ४३ ॥ येषांजन्मसहस्रेषुभोग्यानिरय
यातना ॥ तेहित्वात्र्यंबकंदूरेसत्तीर्थमामनंतिहि ॥ ४४ ॥ येषांक्षीणानिपापा
निचरमंजन्मचोत्तमम् ॥ तेत्र्यंबकंसमाश्रित्यस्वस्थादेहंत्यजंतिहि ॥ ४५ ॥
नत्र्यंबकाद्वेरपरंसुपीठंनत्र्यंबकाद्वेरपरंसुतीर्थं ॥ नत्र्यंबकेशादपरंहिलिंगंनत्र्यं
बकान्मुक्तिपदंपरचं ॥ ४६ ॥ इत्थंश्रुतिस्मृतिन्यायैःत्र्यंबकेत्र्यंबकस्वयं ॥
देहांतेतारकंब्रह्मप्रणवाख्यमुपादिशत् ॥ ४७ ॥ मोचयेदाशुपापेभ्योजंतू
नूत्र्यंबकवासिनः ॥ अतोविमुक्तिदंक्षेत्रमूत्रिसंध्याख्यमिदंध्रुवम् ॥ ४८ ॥ इति
स्कांदवचनेजातंविस्तरस्तत्रैवद्रष्टव्यः ॥ ॥ इतिश्रीगोदायात्राविदेकादर्शमू
लस्थानमहिमविवरणप्रथमप्रकरणं ॥ १ ॥ ॥ श्रीहरीहरार्पणमस्तु ॥ ७ ॥

फलानि ॥ प्रवासस्थेप्रवासत्वंनष्टेहानिश्चजायते ॥ मृतावस्थेनचंद्रेणगतस्यम
रणंभवेत् ॥ १७॥ जयावस्थेजयंविद्यात्हसितेहास्यमेवच ॥ रतावस्थेनचंद्रेणग
तोराज्यारिहाभवेत् ॥ १८ ॥ क्रीडावस्थे...वेक्रीडःसुप्तेशोकविनिर्दिशेत् ॥
भुक्तावस्थेनचंद्रेणसौख्यभोगमवाप्नुयात् ॥ १९ ॥ ज्वरितेचज्वरंविंद्यात्कंपि
तेकंपमेवच ॥ सुस्थितेसोत्थितःकर्तासर्वकार्यार्थसाधकः ॥ २० ॥ करणभरण
दोषंवारसंक्रातिदोषंकुतिथिकुलिकदोषंयामयामार्धदोषं ॥ कुजशनिरविदोषंराहु
केत्वादिदोषंहरतिसकलदोषंचंद्रमासंमुखस्यात् ॥ रवौ ग ग न म यस्थेमुहूर्तोभिजि
तस्तथा ॥ नाशंतिसकलांदोषांश्चक्रमादायमाधवः ॥ २२ ॥ उषःकालेनगर्गस्याच्छ
कुनेनबृहस्पतिः ॥ अंगिरामनसोत्साहविप्रवाक्यजनार्दनः ॥ २३ लग्नेचंद्रेवापि
वर्गोत्तमस्थेयात्राप्रोक्तावांछितार्थैकदात्री ॥ अंभोराशौवातदंशेप्रशस्तंनौकाया
नंसर्वसिद्धिप्रदायी ॥ २४ ॥ वसंतराजः ॥ जातेविरुद्धेशकुनेध्वनीनोव्यावृत्यकृत्वा
करपादशौचम् ॥ आचम्यचक्षीरतरोरधस्तात्तिष्टन्प्रपश्येच्छकुनांतराणि ॥ २५ ॥



॥ ४ ॥

रोहिणीत्र्युत्तराचित्रामूलमार्द्रातथैवच ॥ पाढोत्तराभाद्रविश्वेप्रयाणेमध्यमस्मृ
ताः ॥ ८ ॥ पूर्वात्रयमघाज्येष्टाभरणीजन्मकृत्तिकासार्पस्वातिविशाखाश्चगम
नेपरिवर्जयेत् ॥ ९ ॥ अत्रपद्येत्याज्यघटिकाः ॥ एकविंशतयोग्नेस्तुभरण्याःसप्त
नाडिकाः ॥ एकादशमघायाश्चत्रिपूर्वाणांचषोडश ॥ १० ॥ विशाखासार्पचि
त्राणांरौद्रस्वात्योश्चतुर्दश ॥ आद्यास्तुघटिकात्याज्याःशेषांशेगमनंशुभं ॥ ११ ॥
अथगमनेचंद्रबलम् ॥ आद्यचंद्रश्रियंकुर्यात्मानस्तेषांद्वितीयके ॥ तृत येधन
संपत्तिश्चतुर्थेकलहागमः ॥ १२ ॥ पंचमेज्ञानवृद्धिश्चषष्ठेसंपत्तिरुत्तमा ॥ सप्त
मेराजसन्मानश्चाष्टमेमरणंध्रुवं ॥ १३ ॥ नवमेधर्मलाभश्चदशमेमानसेवितम् ॥
एकादशेसर्वलाभोद्वादशेहानिरेवच ॥ १४ ॥ मेषेचसिंहेधनपूर्वभागेवृषेचकन्या
मकरेचयाम्ये ॥ तुलेचकुंभेमिथुनेप्रतीच्यांकर्कालिमीनेविधुरुत्तरस्याम् ॥ १५ ॥
अथचंद्रावस्थाविचारः ॥ प्रवासनष्टाख्यमताजयाख्याहास्यारतिक्रीडितसुप्त
भुक्ताः ॥ ज्वराव्हयाकंपितसोत्थिताश्चद्विषट्कसंज्ञाहिमगोरवस्था ॥ १६ ॥तेषां

गौडनिबंधेगौतमः ॥ तीर्थयात्रांसमारंभेतीर्थांतुप्रत्यागमेपिच ॥ वृद्धिश्राद्धं
प्रकुर्वीतबहुसर्पिसमन्विम् ॥ ३६ ॥ वृद्धिपदंतद्धर्मार्थम् ॥ वायवीये ॥ गोदां
गंतुंचोद्यतस्तुश्राध्दंकृत्वाविधानतः ॥ विधायकार्पटीवेषंग्रामंकृत्वाप्रदक्षिणं ॥
॥ ३७ ॥ ततोग्रामांतरंगत्वा ॥ श्राद्धशेषस्यभोजनम् ॥ ३८ ॥ पाद्मेतु ॥
गृहान्निसर्तुकामेनत्र्यंबकंगंतुचेतसा ॥ सर्वान्पितॄन्समुच्चार्यश्राद्धंपिंडविवर्जि
20 तम् ॥ ३९ ॥कर्तव्यंनृपशार्दूलततोद्रव्यसमर्पणम् ॥ ब्राह्मणान्भोजयित्वातुइमं
मंत्रमुदीरयेत् ॥ ४० ॥ अयमात्मेतिचद्रव्यंवस्त्रपात्रसमन्वितम् ॥ अनेनमम
भावेनत्र्यंबकप्रीयतामिति ॥ ४१ ॥ इमंमंत्रंसमुच्चार्यत्र्यंबकेशंप्रणम्यच ॥ व
न्हिगांकांचनंस्पृष्ट्वाप्रयाणंचसमाचरेत् ॥ ४२ ॥ निर्णयसिंधौ ॥ साग्नेःसपत्नि
कस्यैवयात्राऽधिकारः ॥ निरग्नेस्तुअपत्निकस्यापि ॥ स्त्रियास्तुपुत्रादिसंमत्यै
व ॥ सधवायास्तुभर्त्रासहैव ॥ अथवाहनविचारः ॥ पद्भ्यांतुव्रजतःपुंसःपूर्ण ॥९॥
यात्राफलंभवेत् ॥ यानेनव्रजतःपुंसःएकभागप्रकीर्तितः ॥ ४३ ॥ वाहनारूढ

तथ.च अष्टिषेर्णिः ॥ यदापशकुनंपश्येद्विपर.तमुपस्थितं ॥ ॥ सघृतंकांचनंद
त्वानिर्विशंकःसुखंव्रजेत् ॥ २६ ॥ एतंमुहूर्ताः ॥ पाद्मे ॥ यरयजन्मसहस्राणां
पुण्यंभवतिसंचितं ॥ तस्यैवत्र्यंबकेगंतुंबुद्धिर्भवतुनान्यथा ॥ २७ ॥ त्र्यंबकंप्रति
यास्यामिदंभाल्लोभाद्प्रमादतः ॥ येवंदतिनरोराजन्तेषांपुण्यफलंशृणु ॥ २८ ॥
अष्टौवर्षसहस्राणितथावर्षशतानिच ॥ सुरलोकेसुखंभुक्त्वापश्चाद्यातिमहीतले
॥ २९ ॥ सद्वंशेजन्मसंप्राप्यधनधान्यसमन्वितः ॥ त्र्यंबकंक्षेत्रमायांतिततो
मुक्तिमुपैतिच ॥ ३० ॥ त्र्यंबकंगंतुकामस्ययमोमुंचातिपूर्वजान् ॥ नानानरक
संघेषुपतितानपिकोटिशः ॥ ३१ ॥ निर्णये ॥ यात्रांगंतुमुद्यतस्यगृहेकृत्यंवदा
म्यहम् ॥ तीर्थयात्राचिकीर्षुःप्राक्विधायोपोषणंगृहे ॥ ३२ ॥ गणेशंचपितृन्
विप्रान्साधून्शक्त्याप्रपूज्यच ॥ कृतपारणकोहृष्टोगच्छेन्नियमधृक्पुनः ॥ ३३ ॥
आगत्याभ्यर्चपितृंश्च यथोक्तफलभाक्भवेत् ॥ उपोष्यरजनीमेकांप्रातःश्राद्धं
विधायच ॥ ३४ ॥ गणेशंब्राह्मणान्नत्वाभुक्त्वाघृतमिश्रितान्सुधीः ॥ ३५ ॥

तो ॥ प्रभातखंडे ॥ यश्चाद्वंकारयेच्छक्त्यातीर्थयात्रांनरेश्वरः ॥ स्वकीयद्र-यदा नाभ्यांतरयपुण्यंचतुर्गुणं ॥ ४८ ॥ अथतीर्थप्राप्तौ ॥ प्रभासखंडे ॥ यानानि नुपरित्यज्यभाव्यंपादचरैःनरैः ॥ लुठित्वालोठनंतत्रकृत्वाकार्पटिकाऽवृती ॥ ॥ ४९ ॥ कृत्वेतिगृह्यान्निर्गमसमयेअकरणेदं ॥ पाद्मे ॥ शिखराणिसमालोक्य पंचलिंगानितानिहि ॥ प्रणमेद्दंडवद्भूमौस्तोत्रमेतदुदीरयेत् ॥ ५० ॥ अथस्तोत्रम् ॥ लिंगानिपंचतव शंकरदुर्लभानि ब्रह्मेंद्रविष्णुवरुणार्कनिशेश्वराणां ॥ विस्फार्यलोचनयुगंपुरतःसमंतात् पश्याम्यहंतदखिलंतवयत्प्रसादात् १ ॥ किं किंकृतंसुकृतिभिर्ममपूर्वजैर्वापुण्यंप्रदिप्यातिनशंकरवेद्मि लोके ॥ येनातुरोभवभुजंमवेष्टितोहंत्वत्पंचलिंगानिचयंहिविलोकयामि ॥ २ ॥ धन्योमदीयजनकोऽजननीचधन्याधन्यंकुलंचसकलंममजन्मधन्यं ॥ यन्मातृगर्भनरकार्णवजायमानो यालोकयामिभवतःशिखराणिपंच ॥ ३ ॥ इतिब्रह्मगिरेःस्तोत्रंपठित्वाप्रणमेत्पुनः ॥ हनूमंतंनमस्कृत्यपूर्वद्वारेणमानवः ॥ ५१ ॥ ज्योतिर्मयस्यलिंगस्यप्रा

ादः षष्ठोभागोऽप्रकीर्तितो ॥ उपानद्गूढपादस्य भागत्रयमुदाहृतम् ॥४४॥ स्कांदे ॥ द्विर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च ॥ वाणिज्यं त्रींस्तथा भागानूहंति सर्वं प्रतिग्रहः ॥ ४५ ॥ पाद्मे ॥ मार्गकस्यापि न ग्राह्यं तृणकाष्ठजलादिकं ॥ ब्रह्मचर्यं दया चैव सर्वत्र परिकीर्तितः ॥ ४६ ॥ निर्णयसिंधौ ॥ मार्गेऽतरा नदिग्रामो स्नानादि परपारतः ॥ अर्वागेव सरस्वत्या एष मार्गगतो विधिः ॥ ४७ ॥ गद्यम् ॥ त्र्यंबकयात्रार्थिनां मध्ये मार्गे गोदाप्राप्तौ मुंडनादि न कार्यं ॥ अधुनिकानां नाशिकपुण्यस्तंभादि गोदावरीतीरवासिनो विप्राः ॥ अत्रैव मुंडनश्राद्धादिकं तु निर्दिशंति तदसत् ॥ कुतः ॥ स्कांदे ॥ श्लो० ॥ उल्लंघ्य गौतमीं गंगां तीर्थान्यानि सेवते ॥ स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ ४७ ॥ अनेन वचनेन गोदामुल्लंघ्य गोदाव्यतिरिक्ततीर्थगमनेन नरकः ॥ न तु गंगामुल्लंघ्य मूलस्थानगमनेन नरक इति निष्कर्षः ॥ लोकेऽपि ॥ प्रतिष्ठानपुण्यस्तंभपंचवट्यादिक्षेत्रवासिनः शिष्टाः स्वनिकटवर्तिनीं गंगामुल्लंघ्य तत्र तीर्थविधि [illegible] तीर्थयात्रां कुर्वं

12

शजैर्यं स्मैलेखोदत्तःतंदूरीकृत्य अन्यः पुरोहितः कृतश्चेत् अधःपातोभवति ॥ ६० ॥
स्वपैतृककुलोद्भवे प्रथममत्रयात्रागतैर्वितीर्णमवलोकयेदनवमेवलेखंस्वकं ॥ क
दापिदापिकस्यचिन्नखरूपत्रमत्रानयेत्सजातिजगतीसुराऽग्रहपरेणभूयादपि ॥
॥ ६१ ॥ यानस्थितौसारथिनःप्रलोभात्स्वचाटुवादैःपरिमोहयंति ॥ स्वस्वा
मिगेहंचनयंतितच्चविप्राऽपमानादपिवर्जनीयम् ॥ ६२ ॥ ननिःसरतिलेखश्चेत्
पितृणांयात्रिकैस्तदा ॥ प्रथमंमीलितोयश्चमाननीयःसवैद्विजः ॥ ६३ ॥ स्मृतौ ॥
येषुतीर्थेषुयेदेवःयेषुतीर्थेषुयेद्विजः ॥ येषुतीर्थेषुयत्तोयंवाचोकिल्सेन्नतन्नतु ॥ ६४ ॥
॥ पाद्मे ॥ ब्राम्हणान्नपरीक्षेततीर्थक्षेत्रनिवासिनः ॥ तएवगुरवःकार्यांतीर्थया
त्राविधौगुह ॥ ६५ ॥ त्र्यंबकस्थाद्विजाःसर्वेत्र्यंबकाएवकेवलम् ॥ तेषांचैवाप
मानेनत्र्यंबकश्चापमानितः ॥ ६६ ॥ अतएव ॥ विशेषतोगौतमधामसंस्थाः ॥३॥
संमाननीयाश्चसमर्चनीयः ॥ शिष्टाश्चशिष्टाइतिनैवमृग्यातत्पूजनात्तृप्यतिगौत
मोमुनिः ॥ ६७ ॥ त्र्यंबकस्थं जलंब्रम्हद्रवदोब्रम्हरूपिणः ॥ विप्रास्तुब्रम्हरू

सादंप्रणमेत्पुनः ॥ ततःशिखरमालोक्यदेवदेवस्यसद्मनः ॥ ५२ ॥यदाऽलोक
यतानृणांसिध्दयःस्युःपदेपदे ॥ ध्वजंवायोभिपश्येच्चसविशुध्दःसदानरः॥५३॥
देहलींप्रणमेद्देवंनस्पृशेत्तांपदाकदा ॥ ५४ ॥ त्र्यंबकक्षेत्रराजोऽयंत्र्यंबकोयत्र
शैलराट् ॥ त्र्यंबकाऽख्यंयत्रालिंगंतत्रसर्वंप्रतिष्ठितं ॥ ५५ ॥ तत्केवलंहिनिलयं
गिरिजाप्रियस्ययत्रस्वयंत्रिभुवनैकपतिःस्वशक्त्या ॥ श्रीत्र्यंबकःसकलकाम
निदानभूतस्तत्धूलिदर्शनमनेनपुराविधेयं ॥ ५६ ॥ आसीद्वायववर्णनायसुक
विःश्रीवाल्मिकीभूतलेव्यासोप्यासतथान्यदैवतगुणानूवक्तुंसमस्तान्यपि ॥ श्री
मत्कृष्णकथामृतंनिगदितुंव्यासात्मजोपिक्षमः॥श्रीमत्त्र्यंबकराजदर्शनफलंवक्तुं
नकोपिक्षमः ॥ ५७ ॥ त्र्यंबक यन्नमस्तुभ्यंकुशावर्ततताेव्रजन् ॥ कुशावर्तंनम
स्कृत्यंततोगुरुगृहव्रजेत् ॥ ५८ ॥ अथलेखाऽवलोकनेविचारः ॥ ॥ दान
हिरावल्यां प्रभासखंडीये ॥ येपूर्वंपूजिताविप्राःपूजिताप्रपितामहै ॥ तान्निराकृ
त्यचान्येषुदद्यान्नैवत्यजेत् ॥ ५९ ॥ अतएवतस्यैपूर्वंलेखोदत्तःअथवास्ववं

23

द्रोग्रहणांभानुरेवच ॥ देवानांचयथाविष्णुर्योगिनांशंकरोयथा ॥ ४ ॥ नदीनांच
यथागंगायथारामोनृपेषुच ॥ वरःपूज्यतमोमान्यःसर्वतोब्रह्मवित्तमाः ॥ ५ ॥ तथे
दंत्र्यंबकक्षेत्रंसर्वक्षेत्रेषुकथ्यते ॥ भुक्तिदंमुक्तिदंचैवसर्वदुःखविनाशकृत् ॥ ६ ॥
ब्रम्हहामुच्यतेपापात्अन्येषांतत्रकाकथा ॥ एकतःसर्वतीर्थानित्र्यंबकक्षेत्रमेकतः
॥ ७ ॥ तुलयातोलयत्धातात्र्यंबकंतुविशिष्यंते ॥ पाद्मे ॥ आसीत्पुराकृतयु
गेश्वेतोनाममहीपतिः ॥ शिवभक्तःशिवप्राणःशिवध्यानरतःसदा ॥ ८ ॥ सक
दाचित्व्रजन्मार्गेतीर्थयात्रेच्छयानृपः ॥ नंदिनंवीक्ष्यपप्रच्छतीर्थानिविविधा
निच ॥ ९ ॥ त्र्यंबकक्षेत्रमाहात्म्यंपप्रच्छचविशेषतः ॥ नंदिकेशउवाच ॥ उत्प
न्नागौतमीयत्रयत्रास्तेत्र्यंबकोगिरिः ॥ यत्रतीर्थंकुशावर्तंतस्मान्नातःपरंनृप ॥
॥ ११ ॥ ब्रम्हाद्रिस्त्रियंबकोह्येषभूमिगोनचपार्थिवः ॥ चिन्मयोपिचिदानंदं
वितनोतितनुत्यजां ॥ १२ ॥अनेकजन्मसाहस्रैपुण्याचारतपोव्रतम् ॥ क्षीणा
युषांनिवासस्यात्त्र्यंबकेनिमिषार्धकम् ॥ १३ ॥ त्रयीमयत्वात्त्रिसुराधिप

पास्तेत्र्यंबकेशप्रसादतः ॥ ६८ ॥ महापातकभोक्तृणांदुःखिनांरोगिणांतथा ॥
हिंसकानांपिशाचादीग्रस्तानांपापकारिणां ॥ ६९ ॥ पापरूपंतद्दत्रैहिकिल्बि
षहंतिनिश्चितं ॥ त्र्यंबकादपरःकोऽन्योभवेज्जीरयितुंक्षमः ॥ ७० ॥ ब्रम्हणा
नांस्वरूपेणस्वयंजीरयतेशिवः ॥ तस्मात्सर्वप्रयत्नेनतत्रत्यान्पूजयेत्द्विजान्
॥ ७१ ॥ तैरेवविहितंकर्मव्यंगमप्यंगसंयुतम् ॥ तेषांपूजाविधानेनत्र्यंबकःपू
जितोभवेत् ॥ ७२ ॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥

॥ इतिश्रीमद्गोदायात्राविवेकाऽदर्शेद्वितीयप्रकरणं ॥ २ ॥

॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ श्रीरस्तु ॥

॥ श्रीगणेशंवंदे ॥ अथातःसंप्रवक्ष्यामिमाहात्म्यंत्र्यंबकस्यच ॥ कुशावर्ताख्य
तीर्थस्यगोदावर्यास्तथैवच ॥ १ ॥ त्र्यंबकक्षेत्रमाहात्म्यंवक्तुंशक्तोनकश्चन ॥ स्वर्गे
मर्त्येचपातालेसिद्धिक्षेत्राणिसंतिहि ॥ २ ॥ त्र्यंबकक्षेत्रसदृशंनतथापिविलो
कये ॥ २ यथामेरुर्गिरीन्द्राणांसरसांसागरोयथा ॥ ३ ॥ नक्षत्राणांयथाचं

वकेसमुत्पन्नागोदाकृतयुगसमाप्तिपर्यंतंअत्रैवास्थिताकिं ॥ त्रिकंटकेतिनाशिक अ०
स्यनामत्रेतायुगेनतुकृतयुगे ॥ कृतेतत्रगताचेतपद्मनगरविराजितेतिवाच्यम्॥ ॥३॥
त्रेतायां ॥ रामेणखरदूषणत्रिशिराश्चत्रयःकंटकाःक्षुद्रशत्रवःनाशितायत्रतत्त्रि
कंटकं ॥ तन्नामकेतत्रतेषांत्रयाणांवधात्त्रिवधस्थानं ॥(तिंवधेति)लोकेव्यवहा
रः॥तस्मात्विरोधपरिहारायत्रिकंटकपदंत्रिशूलवाच्यैवग्राह्यम्॥अतएवपाद्मे
भगवताव्यासेनत्र्यंबकक्षेत्रेतस्याप्रवाहविराजिताउक्ता ॥ वक्ष्यमाणवचनैःश्वे
तराजंप्रतिनंदिकेशवचनं ॥ अंतर्धानेगतेशंभौकुशावर्तान्महानदी ॥ शरच्चंद्रम
रीच्याभाप्रवाहैःसागरंययौ ॥ १९ ॥ इत्यनेनत्र्यंबकेतद्विराजनंअर्थात्सिद्धं॥
कुशावर्तान्महानदीइतिवचनेनकुशावर्तावधेःपरंमहानदीत्वव्यवहारः ॥ कूर्मे ॥
नर्मदायांकुशावर्तेगोदावर्यांविशेषतः ॥ येषुश्राद्धंतृप्तिकरंअनंतफलदंस्मृतम् ॥९॥
॥ २० ॥ किंचत्रिस्थलीसेतौसामान्यप्रघट्टके ॥ नर्मदायांकुशावर्तेश्रीशैलेभरु
कर्णके ॥ गंगाद्वारेप्रभासेचबिल्वकेनीलपर्वते ॥ २१ केदारेफल्गुतीर्थेचगोदाव

त्वात्त्रमस्तकत्वात्त्रिगुणेक्षणत्वात् ॥ त्रिलोकनाथस्त्रिपदाभिधानाद्यस्त्र्यंब
कोवेदशिरःसुरूढः ॥ १४॥ अगस्तिनामहातीर्थगणनाउक्तातन्मध्येत्र्यंबकमेव
गणितंनतुनाशिकं ॥ काशीखंडेषष्टाध्याये ॥ १५॥ कांचीचत्र्यंबकंचैवसप्तगो
दावरीतटं ॥ सरस्वतीसिंधुसंगोगंगासागरसंगमः ॥ १६ ॥ अतएवपाद्मे ॥
कुशावर्तमहातीर्थरूपंयच्चिद्रसोज्वलम् ॥ तेस्नातःचिन्मयोभूत्वारूपवान्शिव
येवसः ॥ १७ ॥ त्रिकंटकेशोभमानंत्र्यंबकंनामनामतः ॥ तत्रतीर्थकुशावर्तंत्रि
पुलोकेषुदुर्लभं ॥ १८ ॥ इत्यत्र ॥ त्रिकंटके त्रिशूलेएवंचत्रिशूलाधिकरणंत्र्यंब
कक्षेत्रमितिज्ञेयं ॥ त्रिकंटकविराजितेत्यत्रत्रिशूलेनविराजिताइत्येवार्थः ॥ पूर्व
वचनेनएकवाक्यतासिध्येः त्रिकंटकशब्दस्त्रिशूलवाचि काशीखंडालिंगपुराणाद्प्र
प्रसिद्धः ॥ केचित्तु ॥ त्रेतायांतुत्रिकंटकं ॥ इतिवचनेनत्रिकंटकेविराजिता ना
शिकेविराजितः नतु त्र्यंबके ॥ इतितत्रार्थमाहुःतेषांतुत्रिकंटकेशोभमानमितिव
चनविरोधःस्पष्टएव ॥ किंच ॥ तादृशार्थकत्रिकंटकपदांगीकारेपिकृतयुगे ॥त्र्यं

चतुष्कोणंभवेत्तीर्थंषट्कोणस्तीर्थराडयम् ॥ २९ ॥ दशपंचधनुःप्रमाणमूर्ध्वम
वनौषष्टिधनूंषिविस्तृतं ॥ परिवृत्यकुशेननिर्मितंमुनिनागौतमशर्मणाहियत् ॥
॥ ३० ॥ इदंकुशावर्तमतीवदुर्लभंपुणैरगण्यैरिहभूपलभ्यते ॥ आयुर्विधातुर्यदि
लभ्यतेकचित्वक्काणिशेषस्यतथाप्यमुष्य ॥ ३१ ॥ वक्तुंनशक्योमहिमामयाते
तथापिकिंचित्प्रवदामितुभ्यम् ॥ ३२॥ षष्टिवर्षसहस्राणिवाराणस्यांतपःकृतं
॥ तत्रैवमरणंप्राप्यनरोयत्फलमाप्नुयात् ॥ तत्फलंस्नानमात्रेणकुशावर्तस्यलभ्य
ते ॥ ३३ ॥ आत्मभारसुवर्णस्यदानंदत्वाद्विग्रहे कुरुक्षेत्रेप्रयागेचयोलक्षंकुरु
तेनरः ॥ सयत्फलमवाप्नोतिकुशावर्तस्मृतेहितत् ॥ ३४ ॥ अपुत्रोलभतेपुत्रान्
कुशावर्तस्यवंदनात् ॥ आधिव्याधिग्रहग्रस्तोनरोमुच्येतमज्जनात् ॥ ३५ ॥ दा
रिद्र्यपीडितोयस्तुस्मरणादपिमुच्यते ॥ ३६ ॥ कुशावर्तेजलावर्तेक्षणंतिष्ठतियो
नरः ॥ संसारसागरावर्तेनसवर्ततकर्हिचित् ॥ ३७ ॥ आर्यावर्तात्कुशावर्तंवरिष्ट
मिहमन्यते ॥ आर्यंयातिकुशावर्तेकुशावर्तेनकुत्रचित् ॥ ३८ ॥ कुशावर्तनिमग्ना

यांहिमालये ॥ एवमादिषुतीर्थेषुश्राद्धंतात्तिकरस्मृतं ॥ २२ ॥ आचारदर्प
णेतु ॥ गंगाद्वारेप्रयागेचगंगासागरसंगमे ॥ कुशावर्तेचगोदायांबिल्वकेनीलपर्व
ते ॥ २३ ॥ कण्वाश्रमेचकौशिक्यांवाराणस्यांघटाश्रमे ॥ एतेषुपितृतीर्थेषुश्रा
द्धमानंत्यमश्नुते ॥ २४ ॥ इत्यादिवचनेषुकुशावर्तगोदयोःपृथक्गणनयाभेदोद
र्शितः ॥ कुशावर्तपदस्यार्थः ॥ कुनाम्नापार्थिवीवृत्तिस्तांतनूकुरुतेतुयः ॥ बोध
स्तमावर्तयेद्यत्कुशावर्तमतोविदुः ॥ ॥ २५ ॥ शोतनूकरणेधातुःकुंश्यति नाशय
तियोबोधःज्ञानंतदावर्तयतियत्तत्कुशावर्तम् ॥ तीर्थपदस्यार्थः ॥ तृप्लवनतरण
योःतीर्थंतेनेनेतितीर्थम् ॥ तीर्थंश्राद्धाध्वरक्षेत्रपापनारीरजःसुच ॥ अवतारार्षे
जुष्टांबुपात्रोपाध्यायनंत्रिषु ॥ २६ ॥ इतिमेदिनी ॥ अमरसिंहोपि ॥ निपानाग
पयोस्तीर्थमृषिजुष्टजलेगुरौ ॥ २७ ॥ गोदापदस्यार्थः ॥ गाज्ञानंददातिसागो
दा ॥ गौः गोतमधेनाःजीवदानंददातिवागोदा ॥ गोदावरीत्यत्रधातोर्वनिप्॥
वनोरचेतिङीपरकारौ ॥ २८ ॥ पाद्मे ॥ कुशावर्तंतीर्थराजंमाहुःसर्वेमहर्षयः ॥

ज्ञानस्यकारणम् ॥ ४८ ॥ गच्छन्तिष्ठन्जपन्ध्यायन्भुंजन्जाग्रन्श्वसन्वद
न् ॥ यत्स्मरेत्सततंगंगांसहिमुच्येतबंधनात् ॥ ४९ ॥ गंगास्नानार्थमुद्युक्तो
मध्येमार्गमृतोयदि ॥ गंगास्नानफलंसोपिनवाप्नोतिनसंशयः ॥ ५० ॥ क
न्यादानेनयत्पुण्यंयत्पुण्यंगोन्नदानतः ॥ तत्पुण्यंस्याच्छतगुणंगंगागंडूषपानतः
॥ ५१ ॥ चांद्रयणसहस्रेणयत्पुण्यंस्याज्जनार्दन ॥ ततोऽधिकफलंगंगाऽमृतपा
नादवाप्नुयात् ॥ ५२ ॥ तीर्थेंदुशेखरे ॥ गंगायांमौसलस्नानंप्राजापत्यसमंभवे
त् ॥ गंगातीरेकृतंपापंगंगास्नानेननश्यति ॥ ५३ ॥ मरीचिः ॥ भूमिष्ठमु
द्धृतंवापिशीतमुष्णमथापिवा ॥ गांगंपयःपुनात्येवपापमामरणांतिकम् ॥ ५४ ॥
॥ महाभारते ॥ भवंतिनिर्विषाःसर्पाःयथाताक्ष्यर्स्यदर्शनात् ॥ गोदायाःदर्शना
त्तद्वत्सर्वपापैःप्रमुच्यते ॥ ५५ ॥ चिकित्सामृतसारे ॥ गोदावरीजलगुणाः ॥ कंडू
कुष्ठप्रशमनंपवित्रंवन्हिदीपनं ॥ पाचनंकफवातघ्नंवारिगोदावरीभवं ॥ ५६ ॥
॥ वैद्यकेतु ॥ नद्रव्यव्ययितानकालनियमोनासौभिषक्प्रार्थनापथ्यापथ्यवि

नामाशावर्तनिमज्जनम् ॥ नस्यादितिकुशावर्तेवशावर्तेतिमन्मतिः ॥ ३९ ॥ इति कुशावर्तविवरणं ॥ ॥ अथगोदामहात्म्यकथनम् ॥ धर्मप्रदीपे ॥ इयंमाहेश्वरीगंगागौतमीवैष्णवीतिच ॥ ब्राह्मीगोदावरीनंदासुनंदाकामदायिनी ॥ ४० ॥ ब्रह्मतेजःसमानीतातस्मात्श्रेष्टातुसर्वदा ॥ ४१ ॥ गोदावर्याःजलंशंभुपापाणश्चजनार्दनः ॥ सिकतामुनयःसर्वेतरवःसर्वदेवताः ॥ ४२ ॥ सप्ताहवासाद्यमुनाघ्हंत्ररिवासदातोयदृशांनिशासु ॥ भागीरथीदर्शनतस्मृतेयंगोदावरीपापहरीजनानां ॥ ४३ ॥ प्रायश्चित्तेंदुशेखरे ॥ येनाऽकार्यशतंकृत्वाकृतंगंगानुसेवनं ॥ तत्सर्वंतस्यगंगाम्भोदहत्यग्निरिवेंधनम् ॥ ४४ ॥ काशीखंडे ॥ मनोवाक्कायजेर्दोषैर्दुष्टोबहुविधैरपि ॥ वीक्ष्यगंगांभवेत्पूतःपुरुषोनाऽत्रसंशयः ॥ ४५ ॥ कृतेसर्वत्रतीर्थानित्रेतायांपुष्करंपरम् ॥ द्वापरेतुकुरुक्षेत्रंकलौगंगैवकेवलम् ॥ ४६ ॥ कलौकलुषचित्तानांपरद्रव्यरतात्मनां ॥ विधिहीनक्रियाणांचगतिर्गंगांविनानहि ॥ ४७ ॥ किमष्टांगेनयोगेनकिंतपोभिःकिमध्वरैः ॥ वासएवहिगंगायांब्रह्म

पिगिनी दुहिता तथा ॥ पितृमातृष्वसाचैवसप्तगोत्राणिवैविदुः ॥ ६१ ॥ एषां
गोत्राणिपुरुषाक्रमेण २४ चतुर्विंशति २० विंशति १६ षोडश १२ द्वादश ११
एकादश १० दश ८ अष्टाविति एकोत्तरशतसंख्या १०१ स्तैषामुध्दारइत्यर्थः
॥ तत्र ॥ पितृकुलेद्वादशपूर्वाःद्वादशपराः इति ॥ चतुर्विंशतिः ॥
॥ २४ ॥ एवमग्रेपिइत्युक्तमब्धौ ॥ एवंच ॥ रुद्रगया यात्रा फलप्राप्ति
पूर्वक रुद्रसायुज्यमुक्ति कामेन यात्रिकेण अत्रैव क्षेत्रे मुंडन श्राध्द गो
दान द्विजभोजन त्र्यंबकसपर्या एवमादोनिविधेयानि ॥ तत्प्रयोगविधा
नंत्वन्यत्र ॥ अतएव ॥ तीर्थंत्र्यंबकमासाद्यकोनमुक्तिमुपेयिवान् ॥ ६२ ॥ इ
तिस्कांदे ॥ देहांततारकोपदेशइतिच ॥ अतोविमुक्तिदंक्षेत्रंत्रिसंध्यःख्यमिदंध्रु
वम् ॥ उत्पत्तौकोटिगुणितंसिंहस्थेचबृहस्पतौ ॥ ६३ ॥ ॥ इतिगोदाया
त्राविवेकाऽदर्शेतृतीयप्रकरणम् ॥ ३ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ छ छ
॥ अथतीर्थयात्राविधिविवरणम् ॥ ॥ स्कंदउवाच ॥ तीर्थयात्राविधिंवक्ष्ये

चारणापिनपरीमार्णनचोद्विगिता ॥ गोदापूर्वरसायनंरसयतांहृष्टानुपानंविना
व्याधिव्याधिजराज्वरादिशमनंधन्वंतारिर्विस्मितः ॥ ५७ ॥ आचारदर्पणेतु ॥
नदीगोदावरीनामत्रिसंध्यंक्षेत्रमुत्तमं॥तीर्थंत्र्यंबकंनामसर्वदेवनमस्कृतं ॥ ५८॥
यत्रास्तेभगवान्भीमःस्वयमेवत्रिलोचनः ॥ तत्रैवपितृतीर्थंचयत्रगोदावरीनदी
निर्णयसिंधौ ॥ पित्रतीर्थशब्देनगयैवोक्ता ॥ अनेनअत्ररुद्रगयात्वत्र्यंबकस्यो
क्तं ॥ गयेवरुद्राइतिरुद्रगया ॥ रुद्रक्षेत्रम् ॥ तथाचाशिवपुराणे ॥ श्लो० ॥ त्रि
संध्याक्षेत्रमासाद्यपितॄणांतारणायच ॥ कर्तव्यासर्ववर्णैश्चगयायात्राविधानतः
॥५९॥ अतःपरंप्रवक्ष्यामितवरुद्रगयाविधिं॥यंकृत्वासप्तगोत्राणितथाचैकाधिकं
शतं ॥ ६० ॥ कुलंचोत्धरतेजंतूनरुद्रलोकंसगच्छति ॥ गयाक्षेत्रसदृशंत्र्यंबकक्षेत्र
मृत्रिसंध्याक्षेत्रं ॥ तद्वदेकोत्तरशतकुलोत्धारेणसमानत्वं ॥ तयोः गय त्र्यंबकक्षेत्र
योरित्यर्थः ॥ इतिगूढाकूतं ॥ रुद्रगयादिरूपेश्रीमत्त्र्यंबकक्षेत्रवर्ये श्रात्धादौकृ
तेसतिसप्तगोत्रैकोत्तरशतकुलोद्धारोभवति ॥ तानिच ॥ पितामाताचभार्याचभ

दा ॥ ९ ॥ तत्रअर्घ्यमंत्राः ॥ पाद्मे ॥ ब्रह्माद्रिशिखरोत्पन्नेत्रिकंटकविराजिते ॥
गौतमःप्रार्थितेगंगेगृहाणार्घ्यंनमोस्तुते ॥ १ ॥ नमोगंगेमहागंगेमहादेवस्थ
वल्लभे ॥ वहतेत्वांमहादेवोगोदावरिनमोस्तुते ॥ २ ॥ औदुंबरतरोमूलाजान्ह
ऱ्यानिसृतंपयः ॥ गौतमप्रार्थितागंगागृहणार्घ्यंनमोस्तते ॥ ३ ॥ त्र्यंबकस्य
जटोद्भूतेगौतमस्याऽघनाशिनी ॥सप्तधासागरंयांतिगोदावरिनमोस्तते ॥ ४ ॥
अर्घ्यंदत्वागुरोराज्ञामाधिगम्यजलंविशेत् ॥ गरोत्वंशिवरूपोसिमांतारयभवार्ण
वात् ॥ १० ॥ देहस्थंसर्वभूषादिवस्त्रादिविदिधानिच ॥ तत्सर्वंगूरवेद्यात्रतूश
स्तेवैश्नवेसति ॥ ११ ॥ पुन्हःप्रविश्यसलिलंसंकल्पंतुसमाचरेत् ॥ अथमुंडन
विचाराः ॥ स्कांदे ॥ मूलमध्याऽवसानेषुगोदाऽलभ्याकलौयुगे ॥ मुंडनंतत्रकु
र्यांद्वैतीर्थश्राद्धंविशेषतः ॥ १२ ॥ प्रमाद्वाद्योनरोमूलंहित्वान्यत्रविशेषभाक् ॥
करोतिमुंडनंश्राद्धंरौरवंचाधिगच्छति ॥ १३ ॥ त्रिस्थलीसेतौ ॥ मुंडनंचोपवा
सश्चसर्वतीर्थेष्वयंविधिः ॥ वर्जयित्वाकुरुक्षेत्रंविशालांविरजांगयां ॥ १४ ॥ ॥ १३ ॥

18

त्र्यंबकस्यजगत्प्रभोः ॥ यंकृत्वामुच्यतेपापात्बहुजन्मसमुद्भवात् ॥ १ ॥ त
तोनित्यक्रियोयजमानःपरिवारयुतःनूतनवस्त्रादिभिरलंकृत्यगोदांप्रार्थयेत् ॥ २ ॥
॥ पाद्मे ॥ मातर्नमामिसुकृतंममपूर्वजानांकिंवाममैवभवकोटिपुसंचितंस्यात् ॥
येनत्वदीयसलिलंभवबंधहारिपश्यामिचर्मनयनेनविधेरपिडयं ॥ ३ ॥ संसा
रघोरगहनेपतितोस्मिनित्यंकामादितस्करशतैःपरिवेष्टितोहम् ॥ त्वंरक्षमामिति
सदाप्रलपन्प्रधावन्त्वामद्यशंभुदयितेशरणागतोस्मि ॥ ४ ॥ नमामिगंगेतव
पादपद्मंसुरासुरैर्वंदितदिव्यरूपं ॥ भुक्तिंचमुक्तिंचददासिनित्यंभावानुसारेणस
दानराणाम् ॥ ५ ॥ इतिगंगास्तुतिंकृत्वादंडवत्प्रणमेत्पुनः ॥ मनसागौतमीं
ध्यायन्मंत्रमेतदुदीरयेत् ॥ ६ ॥ अर्घ्यमंजर्यां ॥ आदौदर्शनमन्विच्छन्गृह्णी
यात्श्रीफलंमुदा ॥ रत्नंपंचविधंपुष्पपूगंचैवसदक्षिणं ॥ ७ ॥ अत्रश्रीफलशब्दे
ननालिकेरंगृह्यते ॥ धर्मप्रदीपे ॥ कूष्मांडंनालिकेरंचकापित्थंपानसंतथा ॥ कद
लींमातुलिंगंचआम्रसप्तमहाफलैः ॥ ८ ॥ अर्घ्यदानंप्रकुर्वीततीर्थयात्रार्थिभिःस

व्यंमुंडनादियथाविधि ॥ २३ ॥ सेतौ ॥ गंगायांमरणेपित्रोःभास्करक्षेत्रएव
हि ॥ निषिद्धतिथिवाराणांनदोषक्षौरकर्मणि ॥ २४ ॥ शिरोगतानिपापा
नियांतिमुंडनतोयतः ॥ आकारयित्वावपनंप्रायश्चित्तंविनिर्दिशेत् ॥ २५ ॥ न
जीवत्पितृकःकुर्यात्तीर्थदेशउपोशणम् ॥ वपनंतैर्थिकंयच्चप्रायश्चित्तादिकंतथा
॥ २६ ॥ स्नात्वादानंप्रकुर्वीतयथावित्तानुसारतः ॥ सर्वतीर्थेष्वयंधर्मःस्याज्जी
वत्पितृकस्यतु ॥ २७ इदंपित्रासहआगतपुत्रविषयपरं ॥ अशक्तश्चेत्पिताय
स्यगंतुंतीर्थंनशक्यते ॥ संजीवत्पितृकःकुर्यात्पैतृकंपितुराज्ञया ॥ २८ ॥ उ
दङ्मुखःप्राङ्मुखोवावपनंकारयेत्सुधीः ॥ केशश्मश्रुनखलोमान्युदक्संस्था
निवापयेत् ॥ २९ ॥ कक्षोपस्थशिखावर्ज्यंश्मश्रुलोमानिवापयेत् ॥ क्रमेणपा
णिपादस्यनखानिचनिकृंतयेत् ॥ ३० ॥ स्मार्तोल्लासे ॥ प्रेतकृत्येराजदंडे
वपनंकेशपूर्वकं ॥ अग्निहोत्रेचतीर्थेचवपनंश्मश्रुपूर्वकम् ॥ ३१ ॥ तीर्थेषुवप
नंधन्यंउपवासश्चस्वर्गदः ॥ दानमक्षय्यमुदितंजन्ममृत्युजराऽपहम् ॥ ३२ ॥

गंगांप्राप्यसरिच्छ्रेष्ठांवपनंयोनकारयेत् ॥ सकोटिकुलसंयुक्तःआकल्पनरकंव्र
जेत् ॥ १५ ॥ उदकंशोणितंदद्यात्पिंडदद्यादमेध्यवत् ॥ नोपतिष्टतितत्सर्वंयोवि
नामुंडितंशिरः ॥ १६ ॥ गंगाप्राप्यसरित्श्रेष्टांकंपतेपापसंचयः ॥ केशान्नाश्रि
त्यतिष्टंतितस्मात्तान्परिवापतेत् ॥ १७ ॥ विनातीर्थंविनायज्ञंमातापित्रोर्मृतिं
विना ॥ योवापयतिलोमानिसभवेत्पितृघ्रातकः ॥ १८ ॥ अनयास्मृत्याजी
वत्पितृकस्यापिमुंडनंसिद्धं ॥ सतो ॥ क्षौरंनैमित्तिकंकार्यंनिषेधसत्यपिध्रुवम्
। पित्रादिमृतिदीक्षासुप्रायश्चित्तेचतीर्थके ॥ १९ ॥ तर्पणंपितृदेवानांश्रा
धदर्नसदाक्षिणं ॥ तीर्थेतीर्थेचगोदाननियतःप्राकृतोविधिः ॥ २० ॥ पाद्मेतु ॥
पेतायस्यनयानीहस्वयंयातिचगौतमीं ॥ तदापुत्रेणकर्तव्यंमुंडनादियथाविधि
। २१ ॥ सहैवचेत्प्रयातानांमुंडनंचविधीयते ॥ धर्मप्रवृत्तावपि ॥ गंगायां
भास्करक्षेत्रेमातापित्रोर्मृतेऽहनि ॥ आधानेयज्ञकालेचषट्सुक्षौरंविधीयते ॥
॥ २२ ॥ पाद्मे ॥ विधवानामपितथामुंडनादिविधिःस्मृतः ॥ भर्तृद्देशेनकर्तं

स्तीर्थप्राप्तौकर्तव्यं ॥ अंतरात्तुफलेच्छयाकृताकृतंभवति ॥ ततोयत्नेनकारये
दितिवचनात्यत्नपदयुक्तवचनेनउक्तमुंडनसमानन्यायत्वात् चकारेणउपसंग्रहा
द्वा ॥ तीर्थंतुशेखरेपि ॥ संवत्सरंद्विमासोनं० ॥ ततोयत्नेनकारयेदभियुक्ताः ॥
यत्नेनेतस्यफलकामनायांसत्यांइत्यर्थप्राप्तावेव ॥ आचारात् ॥ धर्माब्धौतु ॥
दशमासोत्तरंपुनस्ततीर्थप्राप्तौमुंडनादितीर्थविधिः ॥ कालसिद्धांतशिरोमणौतु
॥ विधौयत्रकृतेतीर्थेषण्मासाभ्यंतरेयदि ॥ प्रसंगाच्चेत्पुनःप्राप्तौनकुर्यात्मुंड
नादिकम् ॥ ३८ ॥ निर्णयसिंधौतु ॥ अत्रविशेषः ॥ स्मृत्यंतरे ॥ उर्ध्वमब्दा
दिमासोनात्पुनस्तीर्थंव्रजेद्यदि ॥ मुंडनंचोपवासंचततोयत्नेनकारयेत ॥ ३९ ॥
अत्रपाठांतरं ॥ तदातद्वपनंशस्तंप्रायश्चित्तंमृतेद्विजेति ॥ ४० ॥ त्रिस्थलीसेतौ
भट्टचरणास्तु ॥ उपवासमुंडनेतुसकृदेवकार्ये ॥ तयोर्व्यापकतीर्थोपाध्यवत्सेदे
नविधानात् ॥ मुंडनेनैवकर्तव्यश्राद्धमात्रकं इत्युक्तेः ॥ यत्रतु ॥ व्याप्ततीर्थश्रा
द्धकरणात्व्यापकतीर्थश्राद्धसिद्धिः ॥ तदाप्रतितिनिमित्तंनावृत्तिः ॥ तत्रैव ॥ यत्र



20

इतिब्राह्मे ॥ प्रभासखंडे ॥ शंकरमनसाध्यायन्केशांस्तत्रपरित्यजेत्
॥ तत्त्यक्त्वाऽखिलान्केशान्भूयःस्नानंसमाचरेत ॥ ३३ ॥ गद्यम् ॥
दैवेनमानुषेणवाप्रतिबंधनेननाशिकादौतीर्थेमुंडनादितीर्थविधिंकृत्वा ॥ श्रीम
त्र्यंबकदर्शनपूर्वककुशावर्तस्नानार्थमत्रागतेन यात्रार्थिनामुंडनश्राद्धकार्येएवेत्या
हुर्निबंधकाराः ॥ ३४ ॥ श्लो० ॥ नाशिकेमुंडनंकृत्वात्र्यंबकंसमुपागताः ॥ तैरत्र मुं
डनंकार्यंनकार्यमथवापुनः ॥ ३५ ॥ विवेचनकृतेतस्यप्रोच्यंतेमूलकारिकाः ॥ या
सांविलोकनेनैवसंशयोनाशमाप्नुयात् ॥ ३६ ॥ त्रिस्थलीसेतौ ॥ इदंचमुंडनंद
शमासानंतरंपुनस्तीर्थप्राप्तौवर्तव्यं ॥ संवत्सरेद्विमासोनेपुनस्तीर्थंव्रजेद्यदि ॥
मुंडनंचोपवासश्चततोयत्नेनकारयेत् ॥ ३७ ॥ दशमासोत्तरंतीर्थप्राप्तौ अवश्यं
कार्यं अंतरातुफलेच्छया ॥ भवंतिनतुनियमइति ॥ यत्नेनेतस्यपदस्यार्थः ॥ ए
वंचदशमासाभ्यंतरेफलकामनयामुंडनादिकार्यंइतितात्पर्यं ॥ अपिचत्रिस्थली
सेतौ ॥ तीर्थश्राद्धविचारेपुनरुक्तं ॥ इदंचतीर्थश्राद्धंदशमासानंतरं ॥ पुन

॥ तद्भेदात्सर्वैः क्रियते॥तद्वदत्रापि ॥तथा हि॥प्रभासखंडे॥ शंकरंमनसाध्यायन्के
शान्तत्र परित्यजेत् ॥तत्रत्यक्त्वाऽखिलान्केशान्भूयःस्नानंसमाचरेत॥४१॥स्कांदे
ति॥मूलमध्याऽवसानेषुगोदाऽलभ्याकलौयुगे॥मुंडनंतत्रकुर्याद्वैतीर्थश्राद्धंविशेष
तः ॥४२॥ शिवपुराणेउत्तरार्धे॥ कुशावर्तेतुयेराजन्वपनंचयथाविधि॥कुर्वीततेषां
पितरःशिवरूपाभवंतिहि॥४३॥कौर्मे॥ नर्मदायांकुशावर्तेगोदावर्यांविशेषतः॥
येषुश्राद्धंतृप्तिकरमनंतफलदंस्मृतं ॥४४॥ किंचित्त्रिस्थलीसेतौ ॥ सामान्यप्र
घट्टके ॥ नर्मदायांकुशावर्तेश्रीशैलेभद्रकर्णके ॥ गंगाद्वारेप्रभासेच बिल्वकेनी
लपर्वते ॥ ४५ ॥ केदारेफल्गुतीर्थेचगोदावर्यांहिमालये ॥ एवमादिषुतीर्थेषु
श्राद्धंतृप्तिकरंस्मृतं ॥ ४६ ॥ आचारदर्पणेतु ॥ गंगाद्वारेप्रयागेचगंगासागरसं
गमे ॥ कुशावर्तेचगोदायांबिल्वकेनीलपर्वते ॥ ४७ ॥ कण्वाश्रमेचकौशिक्यां
वाराणस्यांघटाश्रमे ॥ एतेषुपित्र्यतीर्थेषुश्राद्धमानंत्यमश्नुते ॥ ४८ ॥ इत्यादिव
चनेषुकुशावर्तगोदयोःपृथग्गणनयाभेदोदर्शितः ॥ अत एव ॥ प्रमादाद्योनरः

काश्यादौ ॥ एकस्मिन्महातीर्थानिगम्यंते ॥ तदाएकस्मिन्दिनेपितीर्थश्राद्धा
नि बहुनिनिमित्तक्रमेणकार्याणि ॥ निमित्तभेदात् दर्शउपरागश्राद्धवदितिका
त्यायनवचनात् ॥ समाननिमित्तकंतुनकार्यं ॥ रात्रावपिभुक्तेनापितर्पणश्रा
द्धेकार्ये इतित्रिस्थलीसेतौ ॥ निर्णयसिंधौ कालसिद्धांतशिरोमणौचोक्तं ॥ फ
लकामनासत्वेदशमासाभ्यंतरे षण्मासाभ्यंतरे मासत्रयाभ्यंतरेपि ॥ मुंडन
श्राद्धेकार्ये ॥ पुनस्तस्यैवतीर्थस्यप्राप्तौ ॥ फलकामनाऽसत्वेतुतन्नकार्यमितिफ
लितं ॥ एवंच ॥ जनस्थानेगोदारूपतीर्थनिमित्तकमुंडनेकृतेपुनःजनस्थानेपुण्य
स्तंभे प्रतिष्ठानेवायत्रकुत्रापिगमनेकृते पुनःगोदारूपतीर्थप्राप्त प्रसंगात्तत्रमु
डनश्राद्धंपुनःकार्यमितिपूर्वोक्तवचनात्तत्रसर्वत्रगोदायाःसमगुणत्वेनसाधारण
त्वात् ॥ अस्मिन्त्र्यंबकक्षेत्रेतजनस्थानप्रतिष्ठानादिक्षेत्रेषुकृतमुंडनश्राद्धेन
यात्रार्थिना श्रीत्र्यंबकक्षेत्राऽगतेन अत्रैवमुंडनश्राद्धंविधेयम् ॥ स्कांदेप्रभात
खंडीयवचनवृंदसंग्रहात् ॥ यथा ॥ प्रयागेवपनेकृतेसतिकाश्यांवपनमवश्यम्॥

गोदानतत्संगफलापेक्षयातस्यकोटिगुणितफलदायित्वात् ॥ तत्रपिशाचादिवा
धानिवारणात् ॥ तत्रतस्यपुत्रादिसंतानदातृत्वात् ॥ तस्यकुष्ठादिरोगहारित्वा
त् ॥ तत्रतस्यनिवृत्तिनाथदेहस्यादिजलरूपकरणेनमोक्षदायित्वात् ॥ तत्रप्र
सिद्धमहातीर्थत्वाच्चेत्यवेहि ॥ ५१ ॥ किंच ॥ क्षेत्रमपित्र्यंबकंसर्वक्षेत्राधिकंअ
तिपावनप्रदेशरूपं सिद्धिदंक्षेत्रराजंअनपत्यतानाशकं प्रदीपरूपंमहाक्षेत्रंच ॥
॥ ५१ ॥ किंबहुलेखनेनालमितिसर्वमनवद्यमितिदिक् ॥ एतानिवाक्यानियथा
र्थभावान्मात्सर्यमुत्सार्यमुदासुधीभिः ॥ श्रीत्र्यंबकेवाप्यथनासिकेवाज्ञात्वावि
धेयंखलुमुंडनादि ॥ ५२ ॥ अतएव ॥ आत्मनःशुद्धिकामोवापितृणांमुक्ति
हेतवे ॥ वपनंकारयिष्यामितीरेहंतवगौतमि ॥ ५३ ॥ यानिकानिचपापानि
ब्रह्महत्याशतानिच॥केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहम् ॥५४॥ अथ
केशरक्षणेशास्त्रार्थः॥ ॥ राजावाराजपुत्रोवाब्राह्मणोवाबहुश्रुतः ॥ केशसंरक्षणा
र्थायद्विगुणंव्रतमाचरेदितिसतौ ॥ ५५ ॥ स्मार्तोल्लासेतु ॥ द्विगुणेव्रतआचीर्णे

22

मूलंहित्वाऽन्यत्रविशेषभाक् ॥ करोतिमुंडनंश्राद्धंरौरवंचाधिगच्छति ॥ ४९ ॥
इत्यादिसर्वपुराणस्मृत्यादिवचनप्रामाण्यात् अत्रैव मुंडनश्राद्धंभवतिः ॥ तदुक्त
हेतवश्चाधुनाकथ्यंतेसंक्षेपतः ॥ तथाहि ॥ ५० ॥ कलौकुशावर्तस्यअलभ्यत्वा
त् ॥ अन्यत्रमुंडादिकारिणांनरकदातृत्वात् ॥ तस्यत्रिलोक्यांदुर्लभत्वात् ॥
श्रीत्र्यंबकक्षेत्रीयंकुशावर्तजलस्थदुस्यभत्वात् ॥ तस्यश्रेष्ठतमत्वात् ॥ तस्यसर्वा
धिकत्वात् ॥ तस्याविशिष्टतीर्थत्वात् ॥ तस्याविष्णुसायुज्यदायित्वात् ॥
तस्यअचलश्रीदातृत्वात् ॥ तस्यतत्रैवअधिकत्वात् ॥ तस्यसर्वकामप्रद
त्वात् ॥ तद्देशस्यश्राद्धेपावनत्वात् ॥ तस्यकंठरवेणमहातीर्थरूपत्वात् ॥
तत्रप्रयत्नेन श्राद्धादिविधानात् ॥ तस्यमुक्तिप्रदत्वात् ॥ १५ ॥ कौमार्या
दिपुगोदापेक्षयातस्यपृथक्ग्रहणात् ॥ तत्रतस्यविख्यातत्वादुत्तमत्वाच्च ॥
तस्याचिद्रसोज्वलत्वात् ॥ श्रीरामेणापितत्रतीर्थविधिकरणात् ॥ तत्रपरशुरा
मस्यापिमातृवधदोषपरिहरणात् ॥ अब्जकाद्यपेक्षयातत्रतस्यःदुर्लभत्वात् ॥

त्याचदक्षिणां ॥ ६२ ॥ आकारयित्वावपनंप्रायश्चित्तंविनिर्दिशेत् ॥ वाप
यित्वाश्मश्रुकेशान्नखांश्चैवनिकृंतयेत् ॥ ६३ ॥ ब्रम्हांडपुराणेतु ॥ राजदंडं
ब्रम्हदंडंदत्वागोमिथुनंततः ॥ धर्मशास्त्रनियुक्तैश्चषऽब्दानिव्रतंचरेत् ॥ ६४ ॥
ज्योतिर्निबंधेनिर्णयसिंधावपिफलितत्वेनसिद्धम् ॥ अत्रविशेषस्मृत्यंतरे ॥
उर्ध्वमब्दाद्दिमासोनात्पुनस्तीर्थंव्रजेद्यदि ॥ मुंडनंचोपवासंचप्रायश्चित्तमृते
द्विज ॥ ६५ ॥ अस्यायमर्थः ॥ प्रथमयात्रायांप्रायश्चित्तस्यविहितत्वात्
दशमासोत्तरंपुनस्तत्तीर्थप्राप्तौमुंडनश्राद्धंअवश्यंकर्थव्यं नतुप्रायश्चित्तंकर्तव्य
मिति ॥ फलितोर्थः ॥ तेनतीर्थयात्रायांप्रायश्चित्तंकार्यमितिज्ञेयंसरलंकोवि
दैःइत्यलम् ॥ ६६ ॥ प्रायश्चित्तेंदुशेखरे ॥ काम्यमपिप्रायश्चित्तंभवति ॥ इ
त्युक्तंतत्रैव ॥ प्रायश्चित्तांगवपनंविद्वद्दिप्रनृपयोःसधवास्त्रीणांचनास्ति ॥
प्रायश्चित्तंपूर्वे ॥ प्राजापत्येतुगामेकांदद्यात् ॥ प्रायश्चित्तेंदुशेखरेदेवलःगो
मूल्यंतु ॥ गवामभावेनिष्कंस्यात्तदर्धंपादमेववा ॥ दरिद्रःकुरुतेपादंसधनःपूर्ण

द्विगुणादक्षिणाभवेत् ॥ यस्यनद्विगुणंदानंकेशान्वांछंतिरक्षितुं ॥ ५६ ॥ केशानांरक्षणार्थायच्छेदयेदंगुलद्वयं ॥ ५८ ॥ देशकालादिकंस्मृत्वामंत्रस्नानंसमाचरेत् ॥ ५८ ॥ गोमुत्रंगोमयंचैवदाधिसर्पिकुशोदकम् ॥पंचगव्यमिदंपीत्वाशुत्धमाचमनंततः ॥ ५९ ॥ दानानितत्रदेयानिवित्तशाठ्यंनकारयेत् ॥ अथप्रायश्चित्तशास्त्रार्थः ॥ शेखरेतु ॥ प्रायोनामतपःप्रोक्तंचित्तंनिश्चयउच्यते॥६० ॥ तत्वबोधिन्यांतु ॥ प्रायःपापंविजानीयात्चित्तंतस्यविशोधनम् ॥ इतिप्रायःश्चित्तपदस्यार्थः ॥ यत्तुतीर्थयात्रायांप्रायश्चित्तंनकार्यमितितीर्थदर्पणेचोक्तम् ॥ ॥ तथादि ॥ तस्मात्गौतम्यांषडब्दादिप्रायश्चित्तंनकार्यंनिर्मूलत्वात् ॥ विधेर्वैगुण्याभावाच्च ॥ गंगास्नानादिभेदेनप्रायाश्चित्तस्यजातत्वेनतस्याकिंचित्करत्वाच्चेति ॥ तत्तुअज्ञानविलसितं ॥ तेषांवक्ष्यमाणग्रंथीयवचनानिकैर्खंडितं ॥ धर्मप्रवृतौ ॥ प्रायश्चित्तंयथाशक्तिकुर्यात्पापापनुत्तये ॥ प्रायश्चित्तंसमासाद्यदत्वागोमिथुनंततः ॥ ६१ ॥ आज्ञांलब्ध्वाद्विजेभ्यश्चदत्वाश

24

षः ॥ हेमरूप्यंवा ॥ प्रायश्चित्तसमाधेनुरितिप्रायश्चित्तमुक्तावलिः ॥ ७३ ॥
आचारदर्पणेतु ॥ कृत्स्नमेकंनदीस्नानंद्वादशाब्दिजभोजनं ॥ गुंजामात्रंसुवर्णं
हिएततत्कृत्स्नस्यलक्षणं ॥ ७४ ॥ हेमाद्रौदेवलः ॥ महादानेषुयज्ञादौप्रायश्चित्ते
षुकर्मसु ॥ कन्यादानेनदीस्नानेमहासंकल्पमाचरेत् ७५ ॥ अतएवगोदा
स्नानेहेमाद्रिप्रयोगः ॥ धर्मप्रवृत्तौ ॥ प्रायश्चित्तंयथाशक्तिकुर्यात्पापापनुत्तये॥
आज्ञांलब्ध्वाद्विजेभ्यश्चदत्वाशक्त्याचदक्षिणां ॥ ७६ ॥ अनेनसमस्तब्राह्म
णदक्षिणापिवैधमेवकर्मभवति ॥ पाद्मे ॥ जलशायीजगन्नाथःपूजनीयःप्रयत्न
तः ॥ ततःकुशेश्वरंशंभुंगौतमींश्चसुभक्तितः ॥ ७७ ॥ वायव्यांचाग्निदिग्
ख्यातोनृसिंहस्वयमास्थितः ॥ नैर्ऋत्यांरामचंद्रश्चलक्ष्मणेनसमन्वितः ॥ ७८
॥ ईशान्यामाश्विनौदेवौपूर्वस्यांपावकःस्वयं ॥ दक्षिणस्यांतुकेदारःपश्चिमस्यांकु ॥ ३९ ॥
शेश्वरः ॥ ७९ ॥ उत्तरेकेशवोज्ञेयोजंलशायीनुमध्यमःएतेषांतर्पणंकार्यंपूजनं
चपृथक्पृथक् ॥ ८० ॥ अथतर्पणप्रकारः ॥ धर्माब्धौ ॥

माचरेत् ॥ ६७ ॥ रूपकचतुष्टयंनिष्कं ॥ अर्धंरूपकद्वयं ॥ तत्पादःएकरूपकः ॥ ६८ ॥ षड्त्रिंशन्मतेतु ॥ धेनुःपंचभिराढ्यानांमध्यानांत्रिपुराणिका ॥ कार्षापणैकमूल्यापिदरिद्राणांप्रकीर्तिता ॥ ६९ ॥ रजतमाषःपंचगुंजात्मकः ॥ रजतषोडशमाषाःपुराणः ॥ अशीतिगुंजात्मकःएकएवपुराणः ॥ एकत्रिपंचपुराणाःदरिद्रमध्यमोत्तमानांगोमूल्यरूपकः ॥ पुराणकार्षापणौपर्यायौ ॥ ७० ॥ षापणषोडशकंपुराणः ॥ अशीतिगुंजात्मकंताम्रंपणः ॥ तेनकनिष्टिकानांमुद्रायाश्चतुर्थःपादगोमूल्यंभवति ॥ मध्यमानांपादोनपादोनमुद्रागोमूल्यंभवति ॥ उत्तमानांसपादमुद्रागोमूल्यंभवति ॥ ताम्रपणःएवकर्षः ॥ दशकार्षापणाधेनोःस्थवेपंचदशैव तु ॥ द्वात्रिंशत्पनिकागावोहेषवानतुहीनतेति ॥ ७१ ॥ कात्यायनवचनेतु ॥ प्रायश्चित्तातिरिक्तदक्षिणाविषयं ॥ धर्माब्धौ ॥ प्राजापत्येष्वशक्तस्तुधेनुंदधापयस्विनीं ॥ धेनोरभावेनिष्कंस्यात्तदर्धंपादमेववा ॥ ७२ ॥ अत्यशक्तेतु ॥ निष्कपादाधरजततत्समधान्यादिदेयं ॥ निष्कःचत्वारिंशन्मा

॥ श्लो० ॥ नक्तंहविष्यान्नमनोदनंवाफलंतिलाक्षीरमथांबुचाज्यम् ॥ यत्पं
चगव्यंयदिवापिवायुः प्रशस्तमत्रोत्तरमुत्तरंच ॥ ८६ ॥ ॥ इतिश्री
गोदायात्राविवेकाऽदर्शेमुंडनादिप्रथमदिनकृत्यस्यचतुर्थप्रकरणं ॥ ४ ॥ श्री
सांबसदाशिवार्पणमस्तु ॥

॥ श्रीशंवंदे ॥ अतःपरंप्रवक्ष्यामितीर्थश्राद्धंयथाविधि ॥ त्र्यंबकेतीर्थश्राद्धस्य
महिम्नोंतोनविद्यते ॥ १ ॥ ब्रह्महत्यात्रयंकृत्वाराजादशरथःपुरा ॥ यमेनशाशि
तोनित्यंरौरवेषुनृपोत्तमः ॥ २ ॥ सचप्रेतस्वरूपेणगत्वाराममुवाचह ॥ रामराम
महाबाहोब्रह्महत्यात्रयंहिमे ॥ ३ ॥ बाधतेतस्यशांत्यर्थंत्र्यंबकंत्वंव्रजाधुना ॥ नं
दिकेश्वरउ० ॥ पितुर्वचनमाकर्ण्यराघवोतीवदुःखितः ॥ ४ ॥ त्र्यंबकक्षेत्रमाग
त्यददौपिंडंयथाविधि ॥ सद्यएवनृपश्रेष्ठोराजादशरथस्तदा ॥ ५ ॥ दिव्यंविमा
नमारूढोदिव्यदेहोबभूवह ॥ अतस्तत्तीर्थश्राद्धस्यपुण्यसंख्यानविधानतः ॥ ॥२०॥
॥ स्कांदे ॥ ॥ कुशावर्तेनरःस्नात्वाश्राद्धंकृत्वाविधानतः ॥ सप्तजन्म

तीर्थेतिथिविशेषचगयायांप्रेतपक्षके ॥ निषिद्धेपिदिनेकुर्यात्तर्पणंतिलमिश्रितं ॥ ८१ ॥ तिथिविशेषः ॥ अष्टकादिरितिमयूखे ॥ तत्रतिलतर्पणे ॥ तीर्थश्राद्धात्पूर्वम् ॥ नत्वत्रपरेहनि ॥ अथउपवासविचारः ॥ मुंडनंचोपवासश्चसर्वतीर्थेष्वयंविधिः ॥ तीर्थेंदुशेखरे ॥ उपवासःकाम्यएवपातकक्षयकारकः ॥८२ नतुअवश्यकः ॥ इतिकल्पतरुः ॥ अग्रिमकार्येशुध्दिजनकःइत्यन्ये ॥ इमौचमुंडनोपवासौकाम्यौ ॥ ब्राम्हे ॥ तीर्थेषुवपनंधर्म्यंउपवासश्चसर्वदः ॥ दानंमक्षय्यमुदितंजन्ममृत्युजरापहम् ॥ ८३ ॥ त्रिस्थलीसेतौ ॥ अयंचोपवासःफलविशेषार्थएव ॥ नत्वावश्यकः ॥ तीर्थप्राप्तिपूर्वदिनेउपवासइतिकश्चित ॥ धर्मसिंधौतु ॥ तीर्थप्राप्तिदिनेउपवास. ॥ प्राप्तदिनंतत्पूर्वदिनंवा ॥ ८४ ॥ आद्यपक्षेश्राध्दशेषावघ्राणंएकादश्यादिवत् ॥ एतेनप्राप्तदिनेउपवासःअविलंबेनश्राध्दंकार्यम् ॥ पाद्मे ॥ तीर्थोपवासःकर्तव्यस्तद्दिनेनृपसत्तम ॥ द्वितीयेन्हिप्रकर्तव्यंतीर्थश्राध्दंयथाविधि ॥ ८५ ॥ अथउपवासप्रतिनिधिः ॥

पकरास्युरिति ॥ अतएव ॥ संवत्सरोद्धिमासोनंपुनरर्तीर्थंव्रजेद्यदि ॥ मुंडनंपि
डदानंचततोयत्नेनकारयेत् ॥ १३ ॥ श्राद्धेस्थलप्रशस्तिः ॥ तीर्थादष्टगुणंपुण्यं
स्वगृहेददतःशुभे ॥ अविद्वान्प्रतिगृण्हानःभस्मीभवतिदारुवत् ॥ १४ ॥ प्रचे
ताः ॥ सवर्णंप्रेषयेदाप्तंद्विजानांतुनिमंत्रणे ॥ १५ ॥ परगृहेश्राद्धविचाराः ॥
॥ त्रिस्थलीसेतुसारे ॥ ॥ मूल्यंदत्वापरकीयगृहेश्राद्धंकार्यम् ॥
॥ वार्षिकतैर्थिकश्राद्धविचारः ॥ तीर्थप्राप्तिदिने ॥ वार्षिकंतीर्थश्राद्धंच
पृथगेवकार्यं ॥ अदौतैर्थिकंततोवार्षिकं ॥ यदा ॥ आमेनहेम्नावातैर्थिकंत
दादर्शादिनिपृथगेवकार्याणि ॥ तेषांपक्वान्नसाध्यत्वात् यदातैर्थिकंश्राद्धंपाकेन
तदाद्रव्यभेदात् ॥ तद्देवतानांचसर्वासांतीर्थश्राद्धएवइष्टत्वात् ॥ प्रसंगात्दर्श
दिश्राद्धानांतीर्थश्राद्धेनैवासिद्धिरिति ॥ १६ ॥ श्राद्धनकृतेदोषाः ॥ गंगाप्रा
प्यसरित्श्रेष्ठांयोनश्राद्धादिकारयेत् ॥ सकोटिकुलसंयुक्तःआकल्पंनरकंव्रजेत्
॥ १७ ॥ संकल्पितयात्रातिर्थांतरप्राप्तौश्राद्धादिकार्यमेव ॥ वाणिज्यार्थंगतेना



26

सुदौर्भाग्यंभयंतस्यनजायते ॥ ७॥ कौर्मे ॥ नर्मदायांकुशावर्तेगोदावर्यांविशे
षतः ॥ एषुश्राद्धंतृप्तिकरंअनंतफलदंस्मृतं ॥ ८॥ त्रिस्थलीसेतौ ॥ महानदीषु
सर्वासुतीर्थेषुचगयामृते ॥ जीवत्पितापिकुर्वीतश्राद्धंपार्वणधर्मवित् ॥ ९ ॥ स
पुत्रयानकर्तव्यंमुंडनंश्राद्धमेवच ॥ १० ॥ केचित्तु ॥ सपुत्रयापुत्राऽसन्निधाने
पित्राह्मणद्वारासांकल्पविधिनाश्राद्धंकार्यमित्याहुः ॥ तत्रमूलंमृग्यम् ॥ तीर्थद
र्पणेतु ॥ तथापुत्राऽसन्निधानेसपुत्रविधवयापितीर्थश्राद्धंकार्यं ॥ अपुत्रापुत्रव
यत्पत्नीतिवचनात् ॥ इतिस्मृतिरत्नावलीमदनपारिजातादयः ॥ तन्नाऽत्रअपु
त्रवत्पुत्राऽसन्निधानेनाविवक्षितम् ॥ तत्रस्त्रीअनुपनीतश्च ॥ ब्राह्मणद्वारातीर्थ
र्थश्राद्धंकुर्यात् ॥ ११॥ तस्यविचाराः ॥ श्राद्धविचाराः ॥ ब्राह्मणादिषुश्रद्ध
यायत्हुतंतत्श्राद्धं ॥ श्राद्धस्यप्रयोजनम् ॥ सिद्धांतशिरोमणौ ॥ गृहंत्यक्त्वातु
यस्तीर्थंस्नानार्थमनुजोव्रजेत् ॥ यियासुमनुगच्छंतिसंहृष्टाःस्वशरीरिणः ॥ १२ ॥
स्वशरीरिणःदेवपितृगणाः ॥ तस्मात्तीर्थश्राद्धंअवश्यंकार्यम् ॥ अन्यथातेशा

॥ श्राद्धब्राह्मणविषयः ॥ कालविचारः ॥ श्लो० ॥ ब्राह्मणंनपरीक्षेततीर्थेकालंनचिंतयेत् ॥ प्राप्ततीर्थोयदाविद्वांस्तदैवश्राद्धमाचरेत् ॥ २४ ॥ सेतौतु ॥ शक्तेनतर्पणश्राद्धपिंडदानानी ॥ अशक्तेनतर्पणपिंडौ ॥ अत्यशक्तेनतर्पणं ॥ यथाकालंदर्शतीर्थमहालयादिषु ॥ श्राद्धसूर्यास्तविचारः ॥ कालतत्वविवेचने तु ॥ श्राद्धेप्रारब्धेदैवमानुषप्रतिबंधात् आसमाप्तेयदिरविरस्तंयियात्तदा प्रारब्धत्वात्रात्रावपितत्समापनेप्रसक्तेनचनक्तंश्राद्धंकुर्वीतेतिअपस्तंबीयश्रुतिरुपनिषेधः ॥ तथाचसामीकृतमेवस्थापयित्वा परेद्युःकृताकृतम् समापनीयम्॥ यजमानेनापि तदुत्तरमेव भोक्तव्यं नतुपूर्वदिने ॥ २६ ॥ तीर्थदर्पणतु ॥ सर्वंपितृगणोद्देशेनएकएवपिंडोदेयः ॥ कालतत्वशिरोमणौ ॥ त्रिस्थलीसेतौ ॥ ॥ २७ ॥ निर्णयसिंधौच ॥ रात्रावपिभुक्तेनापितर्पणश्राद्धेकार्ये ॥ श्राद्धदेवता श्राद्धमंजर्यां ॥ सर्वश्राद्धेपितुःपितामहस्येत्यादिएकवचनांतएवऊहः ॥ द्वंद्वनिर्देशेसमुदितदेवतात्वापत्तेः ॥ २८ ॥ निर्णयसिंधौबोपदेवः ॥ तातांबात्रित

पिश्राद्धादिकार्यंअवश्यकम् ॥ १८ ॥ अथश्राद्धप्रकाराः ॥ सदैवहिजलांतेतु
आमश्राद्धंप्रशस्यते ॥ गृहाद्दशगुणंपुण्यंलभेत्तीर्थेनिवासकृत् ॥ १९ ॥ पक्वान्नं
नविशेषतइतिपाठः ॥ धर्माब्धौ ॥ पक्वान्नेनश्राद्धंतर्हितेनैवापिंडःकार्यः ॥ हिर
ण्यादिनातुश्राद्धे ॥ सक्तुसंयावपायसपिण्यागुडान्यतमद्रव्याणि ॥ एवंच ॥
हरतक्षाद्धंचदश्राद्धंआमश्राद्धंचहेमकृत् ॥ केवलंपिंडदानंचातिलतोयेनतर्पणैः
॥ २० ॥ शक्तितारतम्येनकार्यं ॥ योदरिद्रैरपिविधिंशक्यःप्राप्तुंजनेश्वर ॥ तु
ल्योयज्ञफलैःपुण्यैतन्निबोधमहीपते ॥ २१ ॥ तीर्थाभिगमनंपुण्यंयज्ञैरपिविशि
ष्यते ॥ २२ विधवाकर्तृकश्राद्धविचारः ॥ विधवाकर्तृकश्राद्धदेवतानियमः ॥
स्वभर्तृप्रभृतित्रिभ्यःस्वपितृभ्यस्तथैवच ॥ विधवाकारयेत्श्राद्धंयथाकालमतं
द्रितः ॥ २३ ॥ यथाकालंदर्शतीर्थमहालयादिषु ॥ अथजीवत्पितृकश्राद्धविष
यः ॥ धर्माब्धौ ॥ वृद्धौतीर्थेचसन्यस्तेतातेचपतितेसति ॥ येभ्यएवपितादद्या
त्तेभ्योदद्यात्स्वयंसुतः ॥ २४ ॥ इतिजीवत्पितृकस्यतीर्थश्राद्धविषयं ॥ २३

दर्शनमात्रेणनिराशाःपितरोगताः ॥ ३५ ॥ श्राद्धेविप्रवर्जः ॥ रोगीहीनातिरि
क्तांगःकोणःपौनर्भवस्तथा ॥ अवकीर्णीकुंडगोलौकुनखीश्यावदंतकइतियाज्ञव
ल्क्यः ॥३६॥ श्राद्धेदर्भवर्जाः ॥ श्राद्धमंजर्यांकात्यायनः ॥ यज्ञपस्तुनिमुष्टौच
स्तंबेदर्भबटौतथा ॥ दर्भसंख्यानविहिताविष्टरास्तरणेषुच ॥ ३७ ॥ दर्भापिंडेषु
निर्माल्याःब्राम्हणाप्रेतभोजने ॥ ३८ ॥ श्राद्धेब्राह्मणाऽवश्यता ॥ धर्माब्धौ ॥
तीर्थश्राद्धेतीर्थवासीनएवविप्राःविगुणाअपिपूज्याःतदभावेअन्यायोज्याः ॥ ब्रा
ह्मणान्नपरीक्षेततीर्थश्राद्धेष्वयंविधिः ॥ ३९ ॥ श्राद्धेसुवासिनीविचारः ॥ भर्तु
रग्रेमृतानारीसहदाहेनवामृता ॥ तस्याःस्थानेप्रयुंजीतविप्रैःसहसुवासिनीमिति
मार्कंडेयवचनं ॥ ४० ॥ श्राद्धेपिंडविचारः ॥ निर्णयसिंधौ ॥ तीर्थेदर्शेचसंप्रोक्तं
कुकुटांडःप्रमाणतः ॥ महालयेगयाश्राद्धेकुर्यादामलकोपमान् ॥ ४१ ॥ विष्णुध
र्मे ॥ तीर्थश्राद्धेसदापिंडान्क्षिपेत्तीर्थेसमाहितः ॥ पिंडानांभंगेवाखरादिस्पर्शे
विचारः ॥ यथाकालंदर्शतीर्थमहालयादिषुपिंडानांभंगेखरादिस्पर्शेचप्राजापत्यं

र्थसपत्नजननीमातामहादित्रयं सस्त्रीस्त्रीतनयादितातजननीसभ्रातराःसस्त्रियः
तातांबात्मभगिन्यपत्यधवयुक् जायापितासद्गुरुःशिष्याप्ताःपितरोमहालयविधौ
तीर्थेतथातर्पणे ॥२९॥ निगमेतु ॥ महालयेगयाश्राद्धेवृद्धौचान्वष्टकासुच ॥ ज्ञे
यंद्वादशदैवत्यंतीर्थेप्रोष्ठपदासुच ॥ ३० ॥ धर्माब्धौ ॥ वृद्धौतीर्थेन्वष्टकासुगया
यांचमहालये ॥ त्रिपार्वणमत्रेष्वंशेषंषट्पौरुषंस्मृतं ॥ ३१ ॥ इतिनवदैवत्यंती
र्थश्राद्धमुक्तम् ॥ श्राद्धेवर्ज्याः ॥ निर्णयसिंधौभविष्ये ॥ अवाहनंविसृष्टिश्चतत्र
तेषांनविद्यते ॥ आवाहनंनतीर्थेस्यात्नार्घ्यदानंतथैवच ॥ ३२ ॥ आहूताःपि
तरःसर्वेकृतार्थाःसंतिवैयतः ॥ ३३ ॥ अर्घ्यमावाहनंचैवाद्विजांगुष्ठनिवेशनं ॥ वि
किरंतृप्तिप्रश्नंचश्राद्धेषंचाविवर्जयेत् ॥ ३४ ॥ श्राद्धेजातिपुष्पंवर्ज्यमितिवृद्धयाज्ञ
वल्क्यः ॥ प्रशस्तमितिस्कांदे ॥ माधवेस्मृत्यर्थसारेचतुलसीनिषिद्धा ॥ निषे
धोनिर्मूलइतिहेमाद्रिः ॥ भविष्येकेतकीनिषिद्धा ॥ अंगिराः ॥ नजातिकुसुमा
निनकदलीपत्रमिति ॥ क्रतुश्च ॥ असुराणांकुलेजातारंभापूर्वंपरिहृये ॥ तस्यः

न्मतस्यचसार्थकम् ॥ ४८ ॥ तेनैवसर्वंविहितंपुण्यंयज्ञादिसंभवं ॥ येनत्र्यंबकमासाद्यपिंडदानंकृतंभवेत् अत्रैवछत्रोपानहकमंडलुप्रभृतिमहादानानिदेवानितिलिख्यंतेतदविस्तारस्तुग्रंथेअवलोकनीयं ॥ ४९ ॥ इतिश्रीगोदायात्राविवेकाऽदर्शेश्राद्धविधिनिरूपणंपंचमप्रकरणम् ॥ ५ ॥ श्रीहरिहरार्पणमस्तु ॥ ५ ॥



कृत्वास्नात्वापिंडान्कुर्याद्यथाविधीतिजातूकर्णः ॥ ४२ ॥ पिंडद्रव्याणि ॥ हेमा
द्रौब्राह्मेच ॥ सक्तुभिःपिंडदानंचसंयावैःपायसेनवा ॥ कर्तव्यंऋषिभिःप्रोक्तंपि
ण्याकेनगुडेनवा ॥ ४३ ॥ श्राद्धेगोधूमपिष्टवर्जं ॥ पिंडदानंयःकुर्यात्चूर्णैर्गोधू
मसंभवैः ॥ श्वानविष्टासमंज्ञेयंविनात्तिलविमिश्रिणैः ॥ ४४ ॥ अनेनात्रश्रीरा
मकर्तृककुशावर्ततीर्थश्राद्धीयपिंडदानेनपितुर्दशरथस्यापि नरकवासोद्धारपूर्वको
त्तमलोकप्राप्तिर्यत्राभूत्तत्रमानवानांमुक्तिदानेकिमवक्तव्यमधीत्वमितेवयंप्रती
यामः ॥ ४५ ॥ अतएव ॥ कुशावर्तेत्र्यंबकक्षेत्रेश्राद्धादौकृतेसतिसप्तगौत्रएकोत्त
रशतकुलोद्धारोभवति ॥ तथाहिपितामाताचभार्याचभगिनीदुहितातथा ॥ पितृ
मातृस्वसाचैवसप्तगोत्राणिवैविदुः ॥४६॥ एषांगोत्राणि ॥ पुरुषाःक्रमेणचतुर्विं
शतिविंशतिषोडशद्वादशएकादशअष्टविंतिएकोत्तरशतसंख्यातेषांउद्धारइत्यर्थः ॥
तत्रपितृकुलेद्वादशपूर्वाःद्वादशपरःइतिचतुर्विंशतिः ॥ एवमग्रेपि ॥ इत्युक्तंमध्यौ
४७ ॥ पाद्मे ॥ अतस्तत्तीर्थश्राद्धस्यपुण्यसंख्यानविद्यते ॥ अहमेवंविधंमन्येज

॥ ततस्तेशरणंजग्मुर्देवदेवायविष्णवे ॥ अथब्रम्हासुरैःसार्धवैंकुंठभुवनंगतः ॥
११ ॥ चतुर्भुजंजगन्नाथंतत्रस्तोतुंप्रचक्रमे ॥ एवंस्तवपरान्देवान्दृष्ट्वासजगतांप
तिः ॥ १२ ॥ प्रत्यक्षीभूयवचनमुवाचमधुसूदनः ॥ विष्णुरुवाच ॥ ब्रम्हन्सुरैःसार्ध
मिहागतोभवान्ज्ञातंमयातत्सकलंहिकार्यं ॥ सुखेनगच्छंतुसुराभयांश्चकार्यंत्व
दीयंसकलंहिसिध्दं ॥ १३ ॥ नंदिके. ॥ गतेषुदेवसंघेषुधात्रासहनिजालयं ॥
वाराहंरूपमास्थायगंगाद्वारंहरिर्ययौ ॥ १४ ॥ गंगाद्वारंसमासाद्यसस्नौतेनै
ववारिणा ॥ अधोधामज्जमानस्तुपातालंप्रतिजग्मिवान् ॥ १५ ॥ हिरण्याक्षं
रिपुंहत्वायज्ञानादायदेवराट् ॥ निमज्जोन्मज्यनिर्यातःकृतकृत्योहरिर्बहिः ॥ १६
॥ तावत्कोलासुरःप्राप्तोहिरण्याक्षस्यशालकः ॥ ब्रह्माद्रेर्दक्षिणेपादेमहत्वेकागुहा
भवत् ॥ १७ ॥ तत्रासीद्दानवोघोरःकोलाकारस्वपुर्धरः ॥ कोलासुरइतिख्या
तःहिरण्याक्षस्यशालकः ॥ १८ ॥ दंष्ट्राग्रंतीक्ष्णमुध्धृत्यरुरंतुंवाराहमागत. ॥ कुर्वन्नु
च्चैर्महाघोषंवाराहस्तमुपागतः ॥ १९ ॥ उभयोरभवद्युध्दंगर्जतोश्चपरस्परं ॥

श्रीगणपतयेनमः ॥ अथपंचतीर्थीविवरणम् ॥ गंगाद्वारेकुशावर्तेबिल्वकेनीलप
र्वते ॥ स्नात्वाकनखलेतीर्थेपुनर्जन्मनविद्यते ॥ १ ॥ इतितेकथितंसर्वंगंगामा
हात्म्यमादितः ॥ शृणुचान्यमहीपालवृत्तंगंगासमुद्भवे ॥ २ ॥ आनीतात्रविधिं
गंगागौतमेनमहर्षिणा ॥ शिवनिर्माल्यदोषेणमुनयोनास्पृशन्हितां ॥ ३ ॥ गौ
तमोपिहितछुत्वात्र्यंबकायन्यवेदयेत् ॥ त्र्यंबकःकथयामासविष्णुंप्रार्थयगौतम ॥
४ ॥ गंगाद्वारंसमागत्यविष्णुःस्नानंकरिष्यति ॥ तस्यसंगममात्रेणगंगापूताभ
विष्यति ॥ ५ ॥ त्र्यंबकस्यवचः श्रुत्वागौतमस्तपसिस्थितः ॥ विष्णुमाराध
यामासविष्णुसूक्तैरनेकधा ॥ ६ ॥ गौतमस्यतुभावेनविष्णुस्तुष्टोब्रवीद्वचः ॥ किं
देयंगौतमब्रूहिसुराणामपिदुर्लभं ॥ ७ ॥ गौतमउ ॥ यदितुष्टोसिदेवेशपवित्रां
कुरुगौतमीं ॥ गंगाद्वारंसमागत्यस्नानंकुरुममाज्ञया ॥ ८ ॥ गौतमायतथेत्यु
क्त्वाविष्णुरंतरधीयत ॥ एतस्मिन्नंतरेराजन्हिरण्याक्षोमहासुरः ॥ ९ ॥ यज्ञा
नादायदेवेभ्योपातालमभिजग्मिवान् ॥ यज्ञेनरहितादेवादुःखमापुरहर्निशं ॥ १०

॥ ३० ॥ अवैधव्यंतथास्त्रीणांयत्काम्यतत्त्वपूरय ॥ कोलासुरवचःश्रुत्वापरो
पकरणायच ॥ ३१ ॥ तथेत्युक्त्वाभद्रकालीतत्रैवांतरधीयत ॥ तत्तप्रभृतितत्तीर्थं
वाराहमितिविश्रुतं ॥ ३२ ॥ ततःप्रभृतीतत्रास्तेकोलांबानामधारिणी ॥ ततःप्र
भृतिगंगापिपावनासाबभूवह ॥ ३३ ॥ गंगांतथाविधांदृष्ट्वागौतमोपिमहामुनिः
कृतकृत्यत्वमापन्नःसंतोषंपरमंययो ॥३४॥इ.गो.प.वि.गंगाद्वारविवरणम्॥१॥का
रिकाक्रमेणअधुनाकुशावर्तगमनंप्राप्तं ॥परंच॥पाठक्रमादर्थक्रमोवलीयानइति
न्यायेनपूर्वमेवकुशावर्तेविधिंविधायअनंतरंगंगाद्वारंगत्वा ॥ बिल्वतीर्थंव्रजेत् ॥
नंदिके॰॥ बिल्वकेश्वरमाहात्म्यंकथयामिसमासतः॥ कदाचित्त्र्यंबकोदेवोनिकुं
जेरहसिस्थितः॥ १ ॥ पार्वत्याक्रीडयामासनीलाद्रेरुत्तरेतटे॥ ललाटेस्वेदजंवा
रितर्जन्यादायपार्वती ॥ २ ॥ बिलमध्येविचिक्षेपतस्माद्बिल्वोबभूवह ॥तत्सर्वं
विजयावेदपश्यंतिंदुरतस्थिता ॥ ३ ॥ पुनःकदाचित्तद्देशंपार्वतीलीलयाययौ ॥
तत्रापश्यन्महावृक्षंपुष्पितंफलितंतथा ॥ ४ ॥ तंदृष्ट्वाविस्मयाविष्टापार्वतीविज

तावत्कोलासुरंहंतुंनीलांबारेणुकातदा ॥ २० ॥ गौतमप्रार्थितातूर्णगंगाद्वारंसमा
ययौ ॥ २१ ॥ नीलांबोवाच ॥ मुंचमुंचमहाविष्णोममभागोयमागतः ॥ अहमे
नंहनिष्यामिभवान्पश्यतुसंगरं ॥ २२ ॥ अयंकोलासुरोविष्णोबहुवर्षाणितिष्ठ
ति ॥ हंतियात्रार्थिगोलोकान्नायांत्यस्यभयाज्जनाः ॥ २३ ॥ प्रार्थिताहंवधा
यास्यगौतमेनमहर्षिणा ॥ अतस्त्वंमुंचदैतेयमहंहन्मिमहासुरं ॥ २४ ॥ मुखमा
हत्यवेगेनहंतुंदेवींपुरोगतः ॥ तावच्छूलेनपार्वत्याद्दृदिविद्धःपपातह ॥ २५ ॥
गौतम्यानीरसंस्पर्शाद्विष्णोःपादाब्जदर्शनात् ॥ नीलांबाशूलपाताच्चतस्यशांता
थदुर्मतिः ॥ २६ ॥ अस्तौषीत्पार्वतीगंगादेवदेवंजनार्दनं ॥ स्तुवंतंतंसमालो
क्यपार्वतीमुदिताभवत् ॥ २७ ॥ पार्वत्यु० ॥ वरंब्रूहिवरंब्रूहिकोलासुरमहामते
कोलासुरउ० ॥ मातस्त्वच्छस्त्रपातेनलोकान्गंतास्मिदुर्लभान् ॥ २८ ॥ लोकाना
मुपकाराश्चमयात्रबहुशःकृताः ॥ अतस्त्वमुपकारार्थंतिष्ठमन्नामधारिणि ॥ २९ ॥
दर्शनंयेकरिष्यंतितवमातर्नरोत्तमाः ॥ तेषांपुत्रांश्चपौत्रांश्चदेहिलक्ष्मींयशाश्वतीं

कोयातिशंभोःसलोकतां ॥ १५ ॥ इतिश्रीपंचतीर्थीविवरणेबिल्वतीर्थप्रकरणं ॥
३ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
अथनीलगंगामाहात्म्यं ॥ ब्रह्माब्रिस्त्र्यंबकःसाक्षात्सर्वदेवेषुपठ्यते ॥ अथनील
गिरिस्तस्यवामजानुःप्रकीर्तितः ॥ १ ॥ अत्रतेकथयिष्यामिकथामेकांपुरातनीं ॥
यस्याःश्रवणमात्रेणकृतकृत्योभवेन्नरः ॥ २॥ यदासप्तर्षयोदेव्याअरुंधत्यासमन्वि
ताः ॥ हरेणप्रेषितादेव्यैहिमाचलगृहंययौ ॥ ३ ॥ हिमवानपिधर्मात्मातान्संपू
ज्ययथाविधिः ॥ कृतांजलिपुटोभूत्वावचनंचेदमब्रवीत् ॥ ४ ॥ हिमालयउवाच
धन्योस्मिकृतपुण्योस्मिसफलंजीवितंमम ॥ यस्यगेहंसमाजग्मुर्मुनयःपुण्यमूर्त
यः ॥ ५ ॥ अहमेषइयंपत्नीकन्येयंतनयाइमे ॥ येनवःकार्यमत्रास्तित्यनुज्ञांदा
तुमर्हथ ॥ ६ ॥ ऋषयऊचुः ॥ भवतःपार्वतीनामकन्यास्तिवरवर्णिनी ॥ महादे
वायदातव्यावचनान्नोगिरीश्वर ॥ ७ ॥ इयंपूर्वकभूपत्नीदक्षस्यतनयासती ॥ दै
ताशंकरस्याभून्महामायामहेश्वरी ॥ ८ ॥ वन्हिंविवेशसापूर्वकेनचित्कार्यहेतु

मांजगौ ॥ पार्वत्यु० ॥ केनायंरोपितोवृक्षोममातीवप्रियंकरः ॥ ५ ॥ विजयोवा
च ॥ तवदेहसमुत्पन्नस्त्वयानज्ञायतेकथं ॥ नामास्यकुरुवैशीघ्रंत्वत्पुत्रोयंनसंश
यः ॥ ६ ॥ अवदत्पूर्ववृत्तांतंस्वेदाज्जननमेवच ॥ विजयायावचःश्रुत्वापार्वतीह
र्षिताभवत् ॥ ७ ॥ बिलेसमुत्थितोयस्मात्तुबिल्वनाम्नांप्रतिष्ठितः ॥ आहूयत्र्यं
बकंतत्रसोपितंवीक्ष्यविस्मितः ॥ ८ ॥ यथास्कंदःसुतोऽस्माकंयथाचैवगणेश्वरः
तथात्वंममपुत्रोसिबिल्वजीवचिरंसुत ॥ ९ ॥ तवपत्रैश्चयेपूजांकरिष्यंतिममान
घ ॥ तेमेमान्याश्चधन्याश्चत्वत्कृतेबिल्वपुत्रक ॥ १० ॥ पार्वतीस्नेहभरिताबि
ल्वमाज्ञापयत्स्वयं ॥ रुद्रार्थंत्वद्दलानूपुत्रयदाचेत्स्यंतिसंघशः ॥ ११ ॥ जनास्त
द्गातिदुःखंमेस्यादंतःक्षेत्रतोव्रज ॥ ततःप्रभृतिनास्त्यत्रबिल्ववृक्षस्यदर्शनं ॥१२
गतेबिल्वेपितत्स्थानेपार्वत्यासहशंकरः ॥ निकुंजसरसोनामबिल्वमित्येवचक्रतुः
१३ ॥ माहात्म्यंवर्धयित्वास्यत्वंतर्धानमवापतुः ॥ तदादिबिल्वतीर्थंचपावनंभु
विप्रथे ॥ १४ ॥ बिल्वंतीर्थेनरःस्नात्वादृष्ट्वाबिल्वेश्वरंशिवं ॥ सर्वपापविनिर्मु

१९ ॥ तत्रदेवीजगन्मातापार्वतीलोकगुप्तये ॥ सिध्दिक्षेत्रमिदंपुण्यंदत्तस्यरक्ष
यकारकं ॥ २० ॥ अत्रतेपुरतपस्तीव्रंमुनयःशौनकादयः ॥ भवानीमत्रपश्यंति
नीलपर्वतवासिनीं ॥ २१ ॥ नतेसंसारचक्रेषुभ्रमंतमुक्तिभागिनः ॥ ययादृष्टा
जगन्मातानीलपर्वतवासिनी ॥ २२ ॥ सप्तजन्मसुवैधव्यंनयानस्याःकथं
चन ॥ सौभाग्यंलभतेपुत्रान्धनधान्यसमन्विता ॥ २३ ॥ अंतेशिवपुरींप्राप्य
पार्वत्यासहमोदते ॥ पार्वत्यानिर्मितंतीर्थंनीलगंगेतिविश्रुतं ॥२४॥ तत्रस्नानंच
दानंचकोटियज्ञफलप्रदं ॥ विवाहेमंगलादेव्यास्थापितंतीर्थदैवतैः ॥ २५ ॥
॥ इहार्थेकथयिष्यामिकथामेकांपुरातनीं ॥ यांश्रुत्वामुच्यतेपापात्कोटिजन्म
समुद्भवात् ॥ २६ ॥ दत्तात्रेयंहरिंसाक्षात्वसंतंनीलपर्वते ॥ पप्रच्छतंमुनिंग
त्वाराजामाहिष्मतीपतिः ॥ २७ ॥ कार्तवीर्यउ. ॥ मुनेसर्वाणितीर्थानित्यक्त्वा
त्वंनीलपर्वते ॥ कथंतिष्ठसिकिंतत्रतन्नोगदितुमर्हसि ॥ २८ ॥ अत्रसिद्धिर्मया
लब्धासिद्धिक्षेत्रमिदंपरं ॥ युगेयुगेप्रसिध्दंस्यात्कीर्तिदंब्रम्हणःकरे ॥ २९ ॥

33

ना ॥ इदानींत्वत्सुताजाताशंकरायप्रदीयतां ॥ ९ ॥ इतितेषांवचःश्रुत्वगिरींद्रोवा
क्यमब्रवीत् ॥ वयंपर्वतरूपाश्चशंकरोदेवतोत्तमः ॥ १० ॥ एवंसतिमुनिश्रेष्ठाः
संबंधःकथमावयोः ॥ आस्माकंसुहृदःसंतिपर्वताएवभूतले ॥ ११ ॥ मुनयऊ
चुः ॥ यदुक्तंभवतावाक्यंतदन्यत्रविरोचते ॥ शंकरोभवतांसाक्षात्विश्वरूपोनि
रामयः ॥ १२ ॥ कदाचित्सभवत्प्रीत्यैःपर्वतोपिभविष्यति ॥ तूष्णीमेवप्रदातव्याक
न्यातस्मैत्वयागिरे ॥ १३ ॥ ततोगिरिर्ददौकन्यांशंकरायनराधिप ॥ गतेबहुतिथेका
लेहिमाद्रिःपर्वतोत्तम ॥ १४ ॥ सत्याद्रौशंकरंश्रुत्वापार्वतरूपमाश्रितं ॥ ऋषीणांवच
नंस्मृत्वापरमंहर्षमाययौ ॥ १५ ॥ तांपार्वतींकरेधृत्वानीलाद्रौसमरोपयत् ॥ वा
मज्ञानौशंकरस्यकौतुकाच्छैलरूपिणः ॥ १६ ॥ याविधिंशांभवींमायाप्रविष्टाका
र्यहेतुना ॥ कृतकार्याथमुंचंतंकलिंप्रैक्षतनिर्मितं ॥ १७ ॥ अन्योन्यशापतांराज
न्यदाशिवविधिस्तदा ॥ स्त्रीस्वभावाद्भयंप्राप्तःकिंभविष्यतःपरं ॥ १८ ॥ जगाम
त्वरितासद्मपितुःसर्वंन्यवेदयत् ॥ तच्छ्रुत्वाहिमवान्देवींनीलाद्रावानयत्स्वयं ॥

आहुःकणखलंनामगौतमस्यमहर्षयः ॥ ३ ॥ तस्यपश्चिमभागेतुगांगंवीक्ष्यपयो
मुनिः ॥ मुक्तापरिमितंदृष्ट्वाकुशेनावर्तमाननोत् ॥४॥ कुशेनावर्तितागंगागौतमे
नमार्षिणाः ॥ कुशावर्तमितिख्यातंतीर्थंत्वनपमंभुवि ॥ ५ ॥ यत्तुकणखलंप्रोक्तं
कुशावर्तसमीपतः ॥ तत्राख्यानंपुरावृत्तंशृणुश्वेतमहीपते ॥ ६ ॥ इंद्रसेनइति
ख्यातोनृपःकृतयुगेपुरा ॥ संपज्ज्ञानाकरोराजन्निषधेशोयतात्मवान् ॥ ७ ॥ ग
वांकोटिसहस्राणिस्वर्णदानान्यनेकशः ॥ वार्धक्येवयसिप्राप्तेतपःकर्तुमनोदधौ
॥८॥ पुत्रेराज्यभरंन्यस्यगंधमादनमागतः ॥ तत्रगत्वामहीपालस्ततापपरमंतपः
॥ ९ ॥ साक्षान्नारायणोदेवस्तंभूपंप्रसस्मादह ॥ वरंमत्तोभियाचस्वेत्यवोचद्वच
नंतदा ॥ १० ॥ इंद्रसेनउ. ॥ मुक्तकामोस्मिदेवेशभवपाशाद्विमोचय ॥ नारा
यणउ. ॥ ब्रह्माद्रिंगच्छभद्रंतेयत्रासिद्धोत्तसोमुनीः ॥ ११ ॥ कणानांविहितंयत्र
खलंभूमौमहार्षिणा ॥ आहुःकणखलंनामतत्रस्थित्वातपःकुरु ॥ १२ ॥ गुप्त
रूपान्निधानःस्वंनाममाचक्ष्वकस्यचित् ॥ वदिस्यंतिजनास्त्वांतन्नाम्नाकणख

मालोडितावसुमतीगिरयःसमंतात् ॥नीलाद्रितुल्यमपरंनविलोकयामि ॥ सि
द्धिप्रदंगिरिवरेंद्रसुताकृपायाः॥प्राप्तिंकरोतुसनकादिमुनींद्रवासं ॥३०॥ त्वमप्यत्र
तपःकृत्वासिद्धिंप्राप्नुहिभूपते ॥ नंदिके. ॥ इतितस्यवचःश्रुत्वाकार्तवीर्योमही
पतिः ॥३१॥ भगवत्याःकृपाकामस्ततापपरमंतपः ॥ अल्पेनैवचकालेननी
लांबारेणुकातदा ॥३२॥ प्रत्यक्षत्वंसमागत्यराज्ञेसिद्धिप्रदाभवत् ॥ जामदग्न्येन
रामेणासिद्धिप्राप्तात्रभूमिप ॥ ३३ ॥ नीलपर्वतवासिन्यारेणुकायाःपदांबुजं ॥
येपश्यंतिनराराजनतेयांतिपुनर्भवं ॥ ३४ ॥ नीलपर्वतमाहात्म्यंकथितंतेमयानृप
॥ यःशृणोतिनरोभक्त्यासोपिपापात्प्रमुच्यते ॥ ३५ ॥ इतिश्रीगोदायात्राविवे
कादर्शेनील[illegible]त्रातीर्थविवरणम् ॥ श्रीहरिहरार्पणमस्तु ॥ श्रीरस्तु ॥ अथकणख
लतीर्थप्रकरणम् ॥ गिरेरधोमुनिर्यातोनापश्यत्गौतमींपुनः ॥ पुनर्गुप्तातदागंगा
क्रोधेनकलुषातदा ॥ १ ॥ इतस्ततोव्रजन्पश्यत्गंगाखेदाकुलोभवत् ॥ कगता
कगतागंगामुनिःप्राहपुनःपुनः ॥ २ ॥ कणानांविहितंयत्रखलंभूमौमहर्षिणा ॥

गो.वे
॥३०॥

अथकुशावर्तविवरणं ॥ कदाचिद्देवकार्येषुसंस्थितेषुमहर्षिषु ॥ माहात्म्यानांच सर्वेषांप्रसंगेसतिभूपते ॥ १ ॥ अशिक्ष्यनारदंपुत्रंब्रह्मावचनमब्रवीत् ॥ ब्रह्मोवाच ॥ २ ॥ चत्वारोविहितावेदास्तत्रतत्रमयोदिताः ॥ तीर्थानांचैवयज्ञानांदेवानांचमहर्षिणां ॥ ३९ ॥ शंकरस्यगणेशस्यगौर्याविष्णोप्रभानिधेः ॥ महिमातुयथाशक्त्यामयासंकीर्तितोहिवः ॥ ४ ॥ परंवक्त्रसहस्रेणतथावक्त्रशतेर्नच ॥ कुशावर्तस्यमाहात्म्यंमयावक्तुंनशक्यते ॥ ५ ॥ इतिब्रह्मवचनःश्रुत्वानारदादिमहर्षयः ॥ सत्यंतथैवतीर्थंतादित्यूचुस्तेपरस्परं ॥ ६ ॥ कथमतएव ॥ नारदस्यमहर्षेःकुशावर्ततीर्थराजदर्शनसमयेगोदास्तुतिरियं॥श्लो०॥नमामिगंगेतवपादपद्मंसुरासुरैर्वंदितलोकपालैः॥भुक्तिंचमुक्तिंचददासिनित्यंभावानुसारेणसदानाशणां॥७॥यागतिर्योगयुक्तानांमुनीनामुर्ध्वरेतसां॥ सागतिःसर्वजंतूनांगौतमीतीरवासिनां ॥८ ॥ दृष्टागोदाशतंपापंस्पृष्टजन्मशतत्रयं ॥ स्नात्वाजन्मसहस्राणिहंतिगोदाकलौयुगे ॥ ९ ॥ नारदंप्रतिगंगोक्तिः ॥ मज्जंतिमुनयःसर्वेत्वमेकः

लाभिधं ॥ १३ ॥ यदातेगौतमीदेवीदर्शनंसंप्रदास्यति ॥ तदामुक्तिंप्रदास्येवग
च्छपूजयशंकरं ॥ १४ ॥ नारायणवचःश्रुत्वाराजाब्रह्मगिरिंययौ ॥ तस्यौकण
खलेपुण्येगौतमस्यचिरंतदा ॥ १५ ॥ तस्यनाम्नोनभिज्ञानातूआहुःकणखलंज
नाः ॥ तत्रागत्यजगन्मातागौतमीलोकपावनी ॥ १६ ॥ कौसुंभवसनंदेवीबि
भर्तीचारुलोचना ॥ सुमध्याचारुसर्वांगीपीनोन्नतकुचद्वया ॥ १७ ॥ दिव्यगं
धसुशोभाढ्यामत्तमातंगगामिनी ॥ संस्तुतामुनिभिर्दिव्यैरर्चितापार्थिवर्षिभिः ॥
१८ ॥ चामरैर्वीज्यमानेनप्रवाहैःपार्श्वयोर्द्वयोः ॥ एवंगंगांपुरोदृष्ट्वानृपःकणख
लाभिधः ॥ १९ ॥ प्रणम्यशिरसादेवींस्नात्वाचेदंवचोब्रवीत् ॥ कणखलउवाच
॥ नमोगंगेमहागंगेमहादेवस्यवल्लभे ॥ वहतेत्वांमहादेवोगोदावरिनमोस्तुते ॥
२० ॥ इतिस्तुत्वाभगवतींप्रणम्यचपुनःपुनः ॥ परिक्रम्यनृपश्रेष्ठःकायंत्यक्त्वादिवं
गतः ॥ २१ ॥ शिवलोकंसमासाद्यशिवपार्श्वचरोभवत् ॥ इतितेकथितंराजन्शृणु
चाग्रेकुतूहलं ॥ २२ ॥ इतिश्रीगोदायात्राविवेकादर्शे ॥ कणखलतीर्थविवरणं ॥ ४ ॥

श्रीगणपतयेनमः ॥ अथअष्टतीर्थविवरणम् ॥ अथाष्टराजन्तीर्थानिशृणुष्वस
कुतूहलात् ॥ कुशावर्तेनरःस्नात्वात्वष्टतीर्थानिसव्रजेत् ॥ १ ॥ बल्लालंतीर्थमाग
त्यस्नानंकुर्यादतंद्रितः ॥ तत्रश्राद्धंप्रकुर्वीतसंतर्प्यपितृदेवतः ॥ २ ॥ बल्लालेशंग
णपतिंवरदंपूजयेन्नरः ॥ ब्राह्मणान्भोजयेत्तत्रगणेशःप्रीयतामिति ॥ ३ ॥
तत्रस्नानंचदानंचमहाविघ्ननिवारणम् ॥ अत्राख्यानंपुरावृत्तंशृणुश्वेतमहीपते॥
४ ॥ गालवस्यसुतोज्येष्ठःकरहोनामविश्रुत. ॥ कुरूपोमंदबुद्धिश्चभ्रातृभीःसति
रस्कृतः ॥ ५ ॥ लज्जितःसोतिदुःखेनत्र्यंबकंशरणंययौ ॥ गौतमोपिकृपाविष्टा
कृपांतस्मैचकारह ॥ ६ ॥ स्वयमाराधितंमंत्रंत्र्यक्षरंसर्वकामदं ॥ बल्लाक्षेतिस्फुटं
बीजंगणनामधिपस्यच ॥ ७ ॥ करटायददौतस्मैपरयाकृपयामुनिः ॥ गौतम
स्यप्रसादेनमंत्रराजप्रभावतः ॥ ८ ॥ प्रत्यक्षोभूद्गणपतिर्वरंब्रूहीत्यवोचत् ॥ क
रटउवाच ॥ सर्वविद्याप्रयच्छस्वभुक्तिंमुक्तिंचदेहिमे ॥ ९ ॥ तथेत्युक्त्वागणपति
गौतमंवाक्यमब्रवीत् ॥ किंतेगौतमदास्यामियदभीष्टंवदस्वतत् ॥ १० ॥ 

किंन्नमज्जसि ॥ नारदउ० ॥ अंबत्वदर्शनान्मुक्तिर्नजानेस्नानजंफलं ॥ १० ॥
अतएवपंचतीर्थीविषये ॥ पुनरुक्तंनास्ति ॥ तत्रापि ॥ नंदिकेशउ० ॥ अतोम
याकथंवक्तुंशक्यतेनृपसत्तम ॥ तथापिकिंचित्तत्राज्ञनलेशमात्रंप्रकाशितं ॥ ११
॥ गंगाद्वारेकुशावर्तेबिल्वकेनीलपर्वते ॥ स्नात्वाकणखलेतीर्थेपुनर्जन्मनविद्यते ॥
१२ ॥ पंचातीर्थानिपुण्यानिमुक्तिदानिनसंशयः ॥ एतानिपंचतीर्थानिकथितानि
मयानृप ॥ १३ ॥ एषांसुस्मरणादेवपापराशिर्विलीयते ॥ यानिकानिचपापा
निब्रह्महत्यासमानिच ॥ तानितानिविनश्यंतिपंचतीर्थनिमज्जनात् ॥ १३ ॥
इतिश्रीगोदायात्राविवेकादर्शेश्रीकुशावर्ताख्यंपंचमतीर्थविवरणम् ॥ श्रीसांब
सदाशिवार्पणमस्तु ॥ श्रीरस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



तेनिष्ठुरः ॥ ९ ॥ तत्रप्रक्षाल्यमांसानिस्नानंधर्मातुरोकरोत् ॥ तस्यामेवनिशा
यांसभुजंगेनचदंशितः ॥ १० ॥ पूर्वकर्मविपाकेनमृतःस्वर्गपुरींययौ ॥ अज्ञाना
द्यत्कृतंस्नानंतत्पुण्येनचतारितः ॥ ११ ॥ इतितेकथितंपुण्यमाहात्म्यंपापनाशनं
॥ विश्वेशमणिकर्णीचवाराणस्यास्तथैवच ॥ १२ ॥ इतिवाराणशीमणिकर्णिका
महिमाद्वितीयतीर्थविवरणं ॥ ३ ॥ ॥ नंदिकेश्वरउ. ॥ ततोगंगालयंगच्छे
दृष्टतीर्थरतोनरः ॥ गंगायआलयंयस्मात्तस्माद्गंगालयंविदुः ॥ १ ॥ अत्रस्थैर्यं
हिगंगायाजगन्मातुःप्रकीर्तितं ॥ अत्रमूर्तिमयीगंगाशिवेनसहमोदते ॥ २ ॥ गं
गाद्वारादिहायाताकुशावर्तमतःपरं ॥ विश्रामस्थानमेतद्धिगंगायाःपरमंविदुः ॥ ३
गंगाद्वारंयथातीर्थंतथागंगालयंविदुः ॥ अत्रस्नानस्यदानस्यपुण्यसंख्यान
विद्यते ॥ ४ ॥ अत्रश्राद्धंप्रकर्तव्यंपितृणांतृप्तिहेतवे ॥ गंगालयस्यमाहात्म्यं ॥३२॥
कथितंपापनाशनं ॥ ५ ॥ यःशृणोतिनरोभक्त्यासोपिपापैःप्रमुच्यते ॥ ६ ॥
॥ इतिगंगालयतीर्थमहिमाविवरणम् ॥ रामलक्ष्मणयोस्तीर्थंततोगच्छेद्यतव्रतः

गौतमउवाच. ॥ प्रसन्नोसिगणाध्यक्षस्तत्रैवांतरधीयत ॥ बल्लालेतितदा
रभ्यतीर्थाख्यानंबभूवह ॥११॥ इतिबल्लालतीर्थविवरणं ॥१॥ ततोवाराणसीं
गच्छेद्यत्रविश्वेश्वरःशिवः ॥ वाराणस्यावियोगेन दुःभजन्माति दुःखितः ॥
॥ १ ॥ प्रेरितोदेवकार्यार्थंदक्षिणाशांययौमुनि ॥ इदंक्षेत्रंसमासाद्यध्यायन
वाराणशींहृदि ॥ विश्वेश्वरंचसततंततापपरमंतपः ॥ कियताचैवकालेनविश्वे
श्वरसमन्विता ॥ ३ ॥ वाराणस्यभवत्तस्यप्रत्यक्षान्नृपसत्तम ॥ वाराणस्युउ. ॥
वरंवरयभद्रंतेकांक्षितंतेददाम्यहं ॥ ४ ॥ अगस्त्यउ. ॥ इहैवतिष्ठमातस्त्वंविश्वेश्व
रसमन्विता ॥ वाराणसीतथेत्युक्त्वातत्रैवांतरधीयत ॥ ५ ॥ तत्रस्नात्वाशिवंनत्वा
संतर्प्यपितृदेवताः ॥ मज्जनायतदग्रेवैगच्छेत्तुमणिकर्णिकां ॥ ६ ॥ अगस्त्या
र्थंमियमपियातात्र्यंबकपत्तने ॥ तस्यांस्नानंचदानंचपितृणांतर्पणंतथा ॥ ७ ॥ त
त्सर्वंनृपशार्दूलख्यानंत्यायप्रकल्पते ॥ अत्राख्यानंपुरावृत्तंशृणुश्वेतमहीपते ॥
॥ पुराचात्राभवत्व्याधःसुमंतुरितिविश्रुतः ॥ नित्यंसमृगयासक्तःपापशिलो

जयन् ॥ १ ॥ ध्यायन्सदाशिवंदेवंजयन्पंचाक्षरंमंनुं ॥ निराहारोयतात्माचत
तापरमंतपः ॥ २॥ गौतमस्यतपस्थस्यराजन्प्रादुरभूच्छिवः ॥ शंकरस्यप्रसा
दोत्रसंप्राप्तोगौतमर्षिणा ॥ ३ ॥ शालीनांसर्वदोत्पत्तिराज्ञयात्रिपुरारिणः ॥ अ
त्यन्नसलिलंयत्रगमिष्यतिमहामुने ॥ ४ ॥ तत्रतत्रभविष्यंतिशालयःसर्वदामु
ने ॥ इत्यादिवरदानंचशंकरेणमुनेःकृतं ॥ ५ ॥ सिद्धिक्षेत्रमिदंपुण्यंकथितंतव
भूपते ॥ अत्रतीर्थविधिःकार्यो ॥ दानंदेयंस्वशक्तितः ॥ ६ ॥ सर्वान्कामानवा
प्नोतिनात्रकार्याविचारणा ॥ शालितीर्थस्यमाहात्म्यंकथितंपापनाशनं ॥ ७ ॥त
त्रतीर्थविधिंकृत्वाशक्रकूपंततोव्रजेत् ॥ इतिग०यायात्रायांशालितीर्थविवर्णम् ॥
६ ॥ अथइंद्रतीर्थविवरणं ॥ इंद्रेणनिर्मितोयस्मात्तइंद्रतीर्थंततःस्मृतं ॥ १ ॥ हत्वा
वृत्रासुरंशक्रोब्रह्महत्यामवाप्नुवान् ॥ सतयाधर्षितोनित्यंसततंपृष्ठलग्नया ॥ २ ॥
पुष्कराद्यानितीर्थानिवभ्रामेतिविशुश्रुमः ॥तथापिनतयामुक्तोमानसंसरआविशत
३ ॥ तत्रसूक्ष्मवपुःकृत्वाकमलान्तरसंस्थितः ॥ ब्रह्महत्यापितत्तीरेप्रतीक्षंतीश

॥ कुशावर्तंसमागत्यरामचंद्रःसलक्ष्मणः ॥ १ ॥ तत्रतीर्थविधिंकृत्वागंगाद्वारंस
मायया ॥ स्त्रीरूपधारिणीदेवीरामपादौननामह ॥२॥ गंगोवाच ॥ रामत्वंनजा
नासिगंगाहंपादसंभवा॥प्रेपिताहंवराहेणकस्मैचित्कार्यहेतवे ॥३॥ वराहोनामि
देवाहतच्छृणुष्वनरोत्तम॥तृतीयश्चावतारोहंराघवःसप्तमीतनुः॥४॥नपूर्वापरयोः
श्रेष्ठ्यंदर्शनंचावयोःक्वचित् अतस्त्वंगच्छरामस्यदर्शनार्थंहरिप्रिये॥५॥इत्यहंस्मा
स्मितनाहंतवसन्निधिमागता॥अत्रतीर्थविधिंकृत्वातस्माद्देवपुरोव्रज ॥६॥ रामल
क्ष्मणइत्याख्यातीर्थस्यास्यभविष्यति ॥७॥ इत्युक्तारार्घवंनत्वाजलरूपाबभूव
ह ॥ रामोपिहितथाचक्रेयथोक्तंगंगयावचः ॥ ८ ॥ रामलक्ष्मणयोस्तीर्थंगंगा
द्वारसमंनृप ॥ तत्रस्नानाच्चदानाच्चनिष्पापोजायतेनरः ॥ ९ ॥ इतितेकथितंरा
जन्रामलक्ष्मणतीर्थयोः ॥ माहात्म्यंशालितीर्थस्यमहिमानमतःशृणु ॥ इतिअ
ष्टतीर्थविवरणेरामलक्ष्णतीर्थवर्णनं ॥ ७ ॥ पंचमं ॥ अथशालितीर्थप्रकरणम्
॥ शालोनाममहावृक्षस्तन्मूलेगौतमोमुनिः ॥ अष्टोत्तरशतंनित्यंशिवलिंगानिपू

तासाध्वीचंद्रिकानामविश्रुता ॥ महिषोनामतद्भातारसातलमगात्पुरा ॥ १५ ॥
सनारदमुखात्श्रुत्वावृत्रासुरनिपातनं ॥ भगिन्यासहसोयातश्चक्रेशक्रगवेषणं
॥ १६ ॥ इंद्रस्यविपदंश्रुत्वात्र्यंबकेतपासिस्थितं ॥ महामाहिषरूपेणहंतुमिनंचवि
निश्चितं ॥१७॥ त्र्यंबकक्षेत्रमासाद्यशक्रकूपसमीपतः ॥ नापश्यत्तत्रदेवेशंपुनःस
कुपितोभवत् ॥१८॥ विषाणाभ्यांक्षुरक्षेपैःशक्रकूपमभंजह ॥ विभज्यशक्रकूपंतं
दैत्यःपातालमाविशत् ॥१९॥ इंद्रतीर्थस्यमाहात्म्यंकथितंतवभूपते ॥ तत्रतीर्थ
विधिंकृत्वास्नातुंकांनचनमाव्रजेत्त् ॥ २० ॥ इतिश्रीगोदायात्राविवेकादर्शे॥७॥
अथकांचनतीर्थप्रकरणं ॥ स्वर्णतीर्थस्यमाहात्म्यंशृणुश्वेतमहीपते ॥ यत्रस्नात्वा
नरोभक्त्याकांचनेशंप्रणम्यच ॥ स्वर्गलोकंसमासाद्यकांचनांगोभिजायते ॥ १॥
कदाचिन्नृपतिःपांडुस्वर्गलोकमपश्यह ॥कुष्ठिनांकुनखीनांचस्वर्गलोकानिवारणं
२॥ दृष्ट्वासदुःखितोभूत्वाव्यासायचन्यवेदयेत् ॥ सव्यासवचनाद्राजाकांचनंतीर्थ
मायया ॥ ३ ॥ तत्रस्नात्वाचदृष्ट्वाचकांचनांगोभभूवच ॥तेनपुण्यप्रभावेणस्वर्ग

तत्क्रतुं ॥ ४ ॥ निरींद्रादेवतःसर्वान्बृहस्पतिमयाब्रुवन् ॥ अस्माकंस्वामिनदेहि शास्तारंत्रिदिवौकसां ॥ हिशास्तारंत्रिदिवौकसां ॥ ५ ॥ परस्परविरोधनवयंदुःखं व्रजेमहि ॥ इतितद्वचनंश्रुत्वाबृहस्पतिरुदारधीः ॥ ब्रह्मणंकथयामासशक्रशुद्धिय थाभवेत् ॥ ब्रह्मोवाच ॥ गुरोत्वमिंद्रमादायत्र्यंबकंव्रजसत्वरः ॥ ७ ॥ तत्रच स्नानदानाभ्यांब्रह्महत्यागमिष्यति ॥ बृहस्पतिर्नमस्कृत्यब्रह्माणंप्रयथौततः ॥ ८ ॥ इंद्रमादायवेगेनत्र्यंबकक्षेत्रमाययौ ॥ इंद्रस्त्र्यंबकमासाद्यततापपरमंतपः ॥ ९ ॥अल्पेनैवचकालेनप्रत्यक्षोभून्महेश्वरः ॥ शुद्धिंसप्रार्थयामासदेवदेवान महेश्वरात् ॥ १० ॥ तथेत्युक्त्वामहादेवेत्वंतर्धानंगतेसति ॥ आनीयप्रणिपा तेनगौतमंतुबृहस्पतिः ॥ ११ ॥ उवाचवचनंशक्रेप्रसादःक्रियतामिति ॥ तथेति गौतमेनोक्तेशक्रःस्वर्गपुरीययौ ॥ १२ ॥ तद्दिनारभ्यलोकेऽस्मिन्नइंद्रतीर्थमिति स्मृतं ॥ इंद्रेश्वरोनामाशिवस्तस्यंतीरेप्रतिष्ठितः ॥ १३ ॥ अन्यच्चयद्भूद्राजन्स्व स्वर्गंशक्रेगतेसति ॥ शृणुष्वकथयिष्येतच्छक्रकूपकथानकं ॥ १४ ॥ वृत्रस्यदयि

अस्माकमपिशापेनशुष्काभवतुसानदी ॥ एवंशप्ताथमुनयोगौतमाश्रममागताः॥
८ ॥ तस्मैनिवेदयामासुःशापांतंचाप्ययाचयन् ॥ गौतमउ० ॥ गौनम्यासंग
तादेवीयदाहल्याभविष्यति ॥ ९ ॥ दिव्यरूपधरारम्याप्रयास्यतिमदंतिकं ॥ भ
वान्मोक्षायगंगापिपुर्वसागरमेष्यति ॥ १० ॥ प्रवाहान्सप्तकृत्वावोतारयिष्य
तिभोद्विजाः ॥ तच्छ्रुत्वावचनंपथ्यंपूर्वसागरमाययुः ॥ ११ ॥ दृषद्रुपास्थितात
त्रगंगाप्लवनकांक्षिणः ॥ अहल्याशापमोक्षार्थंनदीब्रह्मगिरौभवत् ॥ १२ ॥ तां
मोचयित्वागंगातुऋषीन्मोक्तुंजगामह ॥ अहल्यासंगमंनामतीर्थंतत्सर्वकामदं
॥ १३ ॥ तत्रस्नानंचदानंचकोटियज्ञफलंलभेत् ॥ अपुत्रोलभतेपुत्रान्अत्रस्ना
नेनसद्गुणान् ॥ १४ ॥ अविद्योलभतेविद्याअधनोधनमाप्नुयात् ॥ तत्रतीर्थवि
धिंकृत्वाकुशावर्तेसमापनं ॥ १५ ॥ इतितेकथितंराजन्अष्टतीर्थविधानकं ॥
सर्वसौख्यकरंनृणांकिमन्यत्श्रोतुमिच्छसि ॥ १६ ॥ इतिश्रीगोदायात्रावि०अ
हल्यासंगमतीर्थविवरणम् ॥ ८ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ छ ॥

लोकमवाप्नुवान् ॥ ४ ॥ विप्रायकांचनंयत्रदेयंरूपोपलब्धये ॥ अतस्तत्कांचनं
तीर्थंविख्यातंदिविभूतले ॥ ५ ॥ तत्रतीर्थविधिंकृत्वाअहल्यासंगमंव्रजेत् ॥
॥ इतिगोदा० कांचनतीर्थविवरणं ॥ ७ ॥ ७॥ ॥ ॥ नंदिके० ॥ अहल्यायां
तुशप्तायांगौतमेनमहर्षिणा ॥ स्थुवासप्तर्षयोराजन्पूर्वसागररोधसि ॥ १ ॥ पर्व
तोनारदश्चैवभरद्वाजोंगिराभृगुः ॥ मांडव्यश्चपुलोमाश्चइत्येतेऋषयस्मृताः ॥ २
॥ तपस्यंतस्थितातत्रशुश्रुवुःशक्रचेष्टितं ॥ केचिदूचःकथंनैवतयाज्ञातंभविष्यति
॥ ३ ॥ अहोज्ञात्वैवहितयाकृतकर्मभविष्यति ॥ मिथ्याप्रवादःकापट्यंसाहसं
कर्ममुग्धता ॥ ४ ॥ अतिलोभश्चपलतागुणाःस्त्रीणांस्वभावजाः ॥ इत्यादिजह
सुःसर्वेपूर्वसागररोधसि ॥ ५ ॥ अहल्याभगिनीचंडीश्रुत्वाऋषिभाषितं ॥
भगिन्यैकथयामासततःसाकुपिताभृशं ॥ ६ ॥ अहल्योवाच ॥ पर्वताद्यामहा
त्मानोमाहसंतिपुनःपुनः ॥ मच्छापान्मुनयःसप्तभवंतुद्वपदांक्षितौ ॥ ६ ॥ चंडीते
भ्यःपुनर्गत्वाजगौशापस्यकारणं ॥ तदातेमुनयःक्रुद्धाःअहल्यामशपन्नृप ॥ ७ ॥

न्मयोज्ञेयीरूपवानशिवएवसः ॥ ११ ॥ ततःकणखलंदृष्ट्वागंगाकूलेनसंचरन् ॥
नीलगंगांसगंमेशंप्रणम्याभ्यर्चविघ्नहं ॥ १२ ॥ वागीशंप्रणमेत्पूर्वंशक्रतीर्थस्य
चेशगं ॥ हनूमंतंसमभ्यर्च्यक्षेत्रविघ्नविनाशम् ॥ १३ ॥ प्रदक्षणामभिक्रम्यन
त्वस्तुत्वापुनःपुनः ॥ महाभैरवमभ्यर्च्यकार्तिकेयंप्रणम्यच ॥ १४ ॥ त्रिसंध्ये
श्वरमभ्यर्च्यतत्तीर्थकृततर्पणः॥ यस्यदर्शनमात्रेणसंध्यालोपोभवेत्कचित्॥सद्योग
च्छेद्विशुद्धोपिब्रह्मविद्यामवाप्नुयात् ॥ कपोतेशंततोदृष्ट्वातत्तीर्थकृतवंदनः ॥ १६
गायत्रीचसमभ्यर्च्यत्रिसंधेश्वरपृष्ठगां ॥यस्यदर्शनतोदेवीगायत्रीजपकोटिभाक्
॥ १७ ॥ सर्वमंत्रपुरश्चर्याफलंप्राप्नोतिमानवः ॥ प्रतिगृह्यत्रिलोकींचएनसानै
वलिप्यते ॥ १७ ॥ ततोजन्मशताणौघफलसंहरणंपरं ॥ ऋणनिर्मोचनंतीर्थंस्ना
त्वातीर्थेश्वरीनमेत् ॥ १८॥ तत्तत्रिभुवनेशानंनत्वाभ्यर्च्यसमाहितः ॥ क्षणंध्या
येच्चिरंतिष्ठेदव्यग्रोनीललोहितम् ॥ १९ ॥ यस्यप्रसादादिंद्रोसौमुक्तोगौतम
शापतः ॥ भेजेसुराधिपत्यंचपुनःसंशुद्धमानसः ॥ २० ॥ येपापादाभिराः क्रूराः

॥ श्रीहेरंबायनमः ॥ नारदउवाच ॥ नमस्तुभ्यंभगवतेपुरुषायमहात्मने ॥ यो
लीलयासृजद्विश्वंसत्यसंकल्पईश्वरः ॥ १ ॥ भूतभव्यभवन्नाथभगवान्भक्त
गोचरः ॥ त्वमेववेत्सिमहात्म्यंत्र्यंबकस्यमहाद्भुतं ॥ २ ॥ मोहांधचक्षुषामेपःक्षे
त्रराजोधरामयः ॥ धन्यातामम्लाक्षणांचिन्मयोसौनपार्थिवः ॥ ३ ॥ तेवंद्याः
धन्यजन्मानोयेजाताभारतेनराः ॥ ततःसभाग्यायक्षेत्रेस्थितास्तेत्र्यंबकेबुधाः ॥
४ ॥ अत्रलिंगार्चनंप्रोक्तंसर्वसिद्धिकरंनृणां ॥ अधुनावश्यकंब्रूहिनित्यंयत्कार्यम
त्रहि ॥ ५ ॥ ब्रह्मोवाच ॥ प्रातःस्नानंप्रकुर्वीतकुशावर्तेसमाहितः ॥ संध्यासमा
प्यसंतर्प्यदेवर्षिपितृबांधवान् ॥ ६ ॥ कुशेश्वरंप्रणम्याथनारसिंहंप्रपूज्यच ॥ प
रिक्रमेत्कुशावर्तंत्रिःपरिक्रममादरात् ॥ ७ ॥ एकंप्रदक्षिणंकुर्यात्कुशावर्तंततोधिक
म् ॥ सर्वतीर्थमयीगोदासर्वदेवमयःशिवः ॥ ८ ॥ उभयात्मकमेतद्धिकुशावर्तम
तोधिकम् ॥ ९ ॥ कुशावर्तकुशावर्तकुशावर्तेतियोवदेत् ॥ सकदाचनमूढोपिभ
वावर्तेनमज्जति ॥ १० ॥ कुशावर्तमहातीर्थरूपंयत्तुचिद्रसोज्ज्वलम् ॥ तन्स्नाताश्चि

ब्रह्मोवाच ॥ इदंरहस्यंपरममूनवाच्ययस्यकस्यचित् ॥ त्वयिशुध्येंद्रियेभ
क्तेनगोप्यंकिंचिदेवहि ॥ ३२ ॥ महापातकयुक्तस्यप्रवेशःक्वापिनात्रहि ॥
॥ अनिशंममगणोत्रत्रिशूलवरमेशितुः ॥ ३३ ॥ भ्रमंतिसततंलोके
गणांन्विघ्नेश्वरस्यच ॥ मनोभंगायपापानांयात्रायामुद्यतात्मनां ॥ ३४ ॥ क
लत्रपुत्रमित्राप्तबंधुष्वात्मनिदेहिनां ॥ प्रविश्यविघ्नंकुर्वंतिनानाकर्माथदृष्टिभिः
॥ ३५ ॥ यथासन्यसतोदेवाःविघ्नंकुर्वंतिहिस्फुटं ॥ आत्मानाक्रम्ययदयंसमेष्य
दिपरंपदम् ॥ ३६ ॥ अवजानातियस्तानिसज्ञेयःपुण्यकृत्तमः ॥ नोपुण्यसामग्रि
यस्यतीर्थोद्यानेमतिर्नहि ॥ ३७ ॥ ऐषांपापमतिक्षीणापुण्यंसमुदितंचसत् ॥
अतएवतीर्थयात्रायांभवंत्युद्योगचंचुराः ॥ ३८ गच्छमामादरेथैवतीर्थंद्रष्टुंपदेप
दे ॥ पुण्यानामाश्वमेधोत्थंपुण्यंस्यान्नात्रसंशयः ॥ ३९॥ पापीनांब्रह्महत्यादिपा
पंनश्येत्पदेपदे ॥ विमुक्तापापकर्माणःपुण्यांस्तीर्थेवसंतिहि ॥ ४० ॥ अतोनात्रो
त्रविष्टानांमध्येलेशलवोनृणां ॥ पुण्यानामेवधन्यानांप्रवेशस्तुसदाभवेत्॥ ४१ ॥ 

खलाःपिशुनचेतसाः ॥ दृष्ट्वात्रिभुवनेशानंमुच्यतेसर्वकिल्बिषैः ॥ २२ ॥ सद्यः
पापहरंलिंगंसद्यश्चैश्वर्यदायकम् ॥ सद्योमोक्षपदंपूंसांदारिद्र्यफलभागिनां ॥ २३
प्रायश्चित्तधानलिंगेस्मिन्भुवनेशेभविष्यति ॥ मयानीतःपुराशुद्धमनसाभुवनेश्व
रः ॥ २४ ॥ क्षणेनाददाश्वमेधदशकस्यफलंहिमे ॥ अतःशुद्धिमतामेषनानाय
ज्ञफलप्रदः ॥ २५ ॥ अन्येषांदर्शनादेवमहापातकनाशनं ॥ ततःइंद्रेश्वरंनत्वाश
क्रतीर्थमभिस्पृशेत् ॥ २६ ॥ गच्छेत्पूर्वप्रतीहारंशिद्धिद्वारमपावृतं ॥ द्वारश्रियं
नमस्कृत्यदेहलीस्पर्शनंत्यजेत् ॥ २७॥ यत्रविन्ध्येश्वरीवंद्यासदातिष्ठतिकामदा
॥ देहलींप्रणमेद्देवनस्पृशेत्तांकदाचन ॥ २८ ॥ स्पृशत्संबाध्यतेविघ्नैःत्रिधादेवा
त्मभूतजैः ॥ ततःशिखरमालोक्यनमेद्देवस्यसद्मनः ॥ २९ ॥ यदालोकयतांदृ
णांसिद्धयस्युःपदेपदे ॥ माहापातकयुक्तोपियोदेवःशिखरंव्रजेत् ॥ २९ ॥ ध्वजं
वायोभिपश्येतसर्वविशुद्धसदानराः ॥ ३० ॥ नारदउवाच ॥ महापातकिनो
देवकथंक्षेत्रेपिनाकिनः ॥ प्रवेशस्यादिहार्थेनसंशयंछिंदिमानसं ॥ ३१ ॥

 

॥ दुर्गसंसारपाथोधितारिणींसुखकारिणीं ॥ ५३ ॥ विघ्नेश्वरंततोभ्यर्च्यविश्व
कामैकपूरणं ॥ यस्यनत्वैवपूर्णस्यात्सर्वकामवरैर्नरः ॥ ५४ ॥ भद्रेश्वरंसमारा
ध्यभक्तभद्रैकशेवधिं ॥ सर्वाभद्रकरंपुंसांभद्रपीठजयश्रीया ॥ ५५ ॥ स्वर्गसारे
श्वरंपश्चात्स्वर्गमार्गार्गलाहरं ॥ स्वर्गद्वाराग्रविद्योतंनृणांस्वर्गापवर्गदं ॥ ५६ ॥
चतुर्व्यूहेश्वरंपश्चात्ब्रह्मक्षेत्रेश्वरेश्वरं ॥ चतुरोभिजपाप्नोतिचतुर्वर्गफलंमहत् ॥
५७ ॥ तत्रचंडेश्वरंचंडीयोगिनीगणसेवितां ॥ देवस्यवामभागस्थांनत्वाभावे
नपजयेत् ॥ ५८ ॥ तस्यापरश्चतुर्मूर्तिमनंतंविश्वतोमुखं ॥ वाराहंविष्णुमभ्यर्च्य
नारसिंहंचवामनं ॥ ५८ ॥ येषांसंस्मरणेनैवपापरोगादयोनृणां ॥ सद्योनश्यंति
भजतांसंपदःस्युःसुरोचिताः ॥ ५९ पतनेस्खलनेवापिक्षुत्तृट्जृंभनलोचने ॥ तता
विमुक्तंगिरिशंनमेद्यत्रस्थितक्षणं ॥ ६० ॥ अविमुक्तयुगावासफलंतत्प्राप्नुयान्नरः
॥ अविमुक्तसमंलिंगंअविमुक्तंमहीतलं ॥ यथानभोनभस्तुल्यंसागरःसागरोपमं ॥३८॥
॥ ६१ ॥ ततोगणेशमभ्यर्च्यवक्रतुंडंसदास्थितं ॥ षडक्षरेणमंत्रेणसिद्धिमामेक

श्रद्धावतांनपापस्यगंधोपिविजितात्मनाम् ॥ अस्मिन्प्रतिहतेपापेनगंधोयाति पापजः ॥४३॥ प्रनष्टपापगंधोपिपुण्यलोकमवाप्नुयात् ॥ तेनपापस्यवीजेन स्थितोप्यत्रकरोतियत् ॥४४॥ तिर्थेस्मिन्कृतपापोहिनतीर्थफलश्नुते ॥ तस्य पापस्यशुध्यर्थंनित्ययात्राप्रदक्षणा ॥४५॥ शिवनामजपःसेवामहतामितिकीर्तिता ॥ पुण्यंभारविशुद्धात्माभुक्तिंमुक्तिंचगच्छती ॥ ४६ ॥ अतस्तीर्थप्रवेशोहिनैवपातकिनांभवेत् ॥ भ्रममाणेगणाऽनीकेवहिरंतःत्रिशूलके ॥४७॥ सर्वेशः सर्वकर्तायमनुगृण्हातिशंकरः ॥ सएवप्रविशेत्तीर्थंपुण्यैर्जन्मांतरार्जितैः ॥४८॥ इत्थंपुण्यमतिःपुण्यंशिखरंदेवसद्मनः ॥ विलोक्यप्राज्ञःप्रणमेद्दंडवत्पिंडमिष्टदं ॥ ॥४९॥ ततोभास्करपीठेशंप्रणमेत्पूजयन्मुदा ॥ यत्प्रसादात्प्रणश्येतमोहांधभयकारणं ॥५०॥ सिध्देश्वरमथालोक्यशिध्दिनामेकमालयम् ॥ यत्पूजनेननृणां शिध्दिर्हृदंनृत्यतिसर्वदा ॥५१॥ विघ्नेश्वरंसमाराध्यविधिनापुण्यमंत्रतः ॥ निर्विघ्नैरभिभूयेत[illegible]पदेपदे ॥ ५२ ॥ ततोदुर्गांमहाघोरांमहादुर्गप्रहारिणीं

त्वासतिष्ठेन्मुक्तिमंडपे ॥ ७४ ॥ सिद्धान्संपूज्यनत्वाजंब्रह्माणंमांश्रियःपतिं ॥
गुरून्प्रणम्यप्रयतःसमासीनौवरासने ॥ ७५ ॥ ततोध्यात्वामहादेवंप्रजपेद्रुद्रमा
दरात् ॥ पंचाक्षरंषड्वर्णंवाघोराघोरमवांतकम् ॥ ७६ ॥ मंत्रराजमथान्यांश्चमं
त्रान्स्वस्थोजपेन्नरः ॥ जितेंद्रियोजितप्राणोजितसंगोजितासनः ॥ ७७ ॥ क्ष
णंक्षणार्द्धंस्थानस्थोलभेयुर्दुर्लभंसुरैः ॥ इतिनित्यभजन्यात्रामिषेणत्रिपुरांतकम्
७८ ॥ सर्वयज्ञफलंमर्त्यःप्राप्नुयात्योदिनेदिने ॥ यात्राध्यायमिमंपुण्यंयःपठेत्त्
श्रुणुयाच्चयः ॥ सर्वयात्राफलंसोपिप्राप्यतेमुक्तिमाप्नुयात् ॥ ७९ ॥ इतिश्रीगो
दायात्राविवेकादर्शेनित्ययात्राविधौनवमप्रकरणम् ॥९॥ सांबसदाशिवार्पणमस्तु
श्रीसिद्धिबुद्धिपतयेनमः ॥ अथत्रिपिंडीविधिः ॥ अथातःसंप्रवक्ष्यामित्रिपिंड्या
स्तुविधानकम् ॥ भूतप्रेतपिशाचानांज्वरादीनांनिवृत्तये ॥ १ ॥ एकोद्दिष्टवि
धानेनएकतंत्रेणतद्भवेत् ॥ पिशाचमोचनेतीर्थेकुशावर्तेविशेषतः ॥ २ ॥ ब्रह्मवि
ष्णुशिवादीनांश्राद्धत्रयमथोच्यते ॥ सुस्नाताद्भिराचार्यैरुक्तमंत्रैर्महार्षिभिः ॥

44

शेवधिः ॥ ६२ ॥ ततोमोक्षपदंनत्वामोक्षद्वारेश्वरंनमेत् ॥ सनकादिभिराचार्यैं
सिद्धैर्बहुभिरावृतं ॥ ६३ ॥ सनकंसनंदनंचैवसनातनमपीश्वरं ॥ सनत्कुमारयो
गींद्रंदत्तात्रेयेश्वरंपरं ॥ ६४ ॥ कपिलेशंमहालिंगंनारदेशंतवप्रियं ॥ वामदेवं
पिप्पलादंदुर्वासंतमथारुणं ॥ ६५ ॥ असितंदेवलंव्यासंशुक्रंगौतममार्षभान् ॥
लिंगरूपधरान्मुक्तिमंडपेकृतविष्टरान् ॥ ६७॥ नत्वास्तुत्वातुसंसारसागरोद्धारचं
चुरान् ॥ मोक्षद्वारेश्वरंनत्वापुनःपूजामवस्थितान् ॥६८ ॥ गच्छेन्नंदीश्वरंनत्वा
धर्ममूर्तिंपुरस्थितम् ॥ तदग्रेदंडवन्नत्वादेवंपशुपतिंप्रभुं ॥ ६९ ॥ मोक्षलक्ष्मींसमा
नंचभैरवंप्रणमेत्ततः ॥ यस्यसंपूजनात्सद्यःकामानिष्टांल्लभन्नर. ॥ ७० ॥ ततो
भक्तैकशरणंकारणंभवहारिणं ॥ प्रणम्यत्र्यंबकंदृष्ट्वाभक्त्यार्पितमनोंबुजः ॥ ७१
॥ विधिवद्देवमभ्यर्च्यत्र्यंबकंविश्वरंजकं ॥ कांकांसिद्धिंनलभतेनरोप्यमरदुर्लभां
॥ ७२ ॥ मयैषाविहितायात्रानित्यंपूजार्थमीशितुः ॥ जानताजानतावापिप्रसी
दत्र्यंबकानया ॥ ७३ ॥ इतिमंत्रंसमुच्चार्यसमग्रंफलमाप्नुयात् ॥ त्र्यंबकेशंपुनर्नं

तेषामुद्धारणायेतिसंप्रोच्यचततोवदेत् ॥ १४ ॥ ब्रह्मविष्णुशिवप्रीत्यैपिंडत्रयवि
धानकं ॥ करिष्येतुसमुच्चार्यजलंभुविसमुत्सृजेत् ॥ १५ ॥ ब्रह्मविष्णुशिवादी
नांवृणुयात्सूक्तजापकान् ॥ संपूज्यतान्विधानेनप्राच्यावाच्युत्तरासुच ॥ १६ ॥
कलशत्रितयंस्थाप्यस्वशाखोक्तविधानतः ॥ ब्रह्मविष्णुशिवानांचप्रतिमाःकारये
त्क्रमात् ॥ १७ ॥ राजतींचैवसौवर्णींताम्रींचकलशोपरि ॥ प्रागादितश्चविन्यस्य
वन्ह्युत्तारणपूर्वकम् ॥ १८ ॥ प्राणप्रतिष्ठांकृत्वाचपूजाकार्यायथाविधि ॥ जपे
युर्ब्राह्मणाःमंत्रसूक्तानितिसृणांप्रथक् ॥ १९ ॥ ब्रह्मविष्णुशिवादीनांततःश्राद्धं
समारभेत् ॥ व्रीहियवतिलानांचपिष्टंपिंडार्थमाहरेत् ॥ २० ॥ दुग्धंदधिघृतंचैव
शर्कराचतथामधु ॥ पिंडद्रव्येषुसंमिश्र्यपाद्यादिभि[illegible]र्चयेत् ॥ २१ ॥ ब्राह्मणां
स्ताततोदद्यादासनंचार्घ्यमेवच ॥ चंदनादिभिरभ्यर्च्यभोजनंकल्पयेत्ततः ॥ २२
पर्वाग्रेष्वेवदर्भेषुत्व्यवनेजनमाचरेत् ॥ ब्रूह्येयंपितृमादायदद्यात्श्रद्धासमन्वितः ॥
२३ ॥ तयोयवमयंपिंडंदद्यात्चैवतृतीयकम् ॥ कृत्वैनंपिंडदानंतुपूजयेच्चयथावि

३ ॥ भूतप्रेतपिशाचाश्चयक्षगंधर्वराक्षसाः ॥ शाकिन्यादिग्रहाश्चैवरेवतीजृंभका
दयः ॥ ४ ॥ एकद्वित्रिज्वराश्चैवचातुर्थमासपक्षजाः ॥ संततादिसमायुक्तनाना
व्याधिप्रपीडिताः ॥ ५ ॥ अन्येषांदुष्टरोगाणांशांत्यर्थंश्राद्धमाचरेत् ॥ पिंडत्रयवि
धानंतुकार्यंशुद्धेनचेतसा ॥६ ॥ शांत्यर्थंसर्वरोगघ्नंसर्वग्रहनिवारणम् ॥ कार्ति
कादिषुमासेषुचतुर्षुविधिपूर्वकम् ॥ ७ ॥ शुद्धपक्षेतथाकृष्णेएकादश्यांतिथौभवे
त् ॥ अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोरपि ॥ ८ ॥ नकालनियमस्तस्यदो
षशांतिंसदाभवेत् ॥ ब्रह्माणंविष्णुमीशानंपूजयेत्विधिपूर्वकम् ॥ ९ ॥ सुप्रदेशेशु
भेरम्येदेवतायतनेतथा ॥ नदीसंगमतीर्थेषुपुण्यक्षेत्रेशिवालये ॥ १० ॥ तुलस्या
सन्निधौवापिपिप्पलस्यचसन्निधौ ॥ पिशाचमोचनेतीर्थेत्र्यंबकेवाप्रयत्नतः ॥ ११
॥ प्रातःस्नानादिविधिवत्कृत्वामाध्यान्हिकंततः ॥ संमार्जनोपलेपाभ्यभूमिशो
धनमाचरेत् ॥ १२ ॥ आचम्यप्राणानायम्यदेशकालौचकीर्तयेत् ॥ ज्वरादिरो
गशांत्यर्थंसर्वोपद्रवशांतये ॥ १३ ॥ अस्मत्कुलेमृतानांतुदुर्गतानांतथैवच ॥

नः ॥ कथंतेषांभवेन्मार्गः किंस्थानंकागतिर्भवेत् ॥ १ ॥ कथंश्राद्धंभवेत्तेषांविधा
नंचविधीयते ॥ त्वत्तोहंश्रोतुमिच्छामिब्रूहित्वंपरमेश्वर ॥ २ ॥ श्रीकृष्णउवाच ॥
साधुसाधुमहाप्राज्ञकृतापृच्छागरीयसी ॥ ब्रम्हचर्याश्रमादीनांद्विजानामपमृत्यु
ता ॥ ३ ॥ तेषांमार्गोगतिःस्थानंविधानंचविधीयते ॥ श्रूयतांमुनिशार्दूलअनंतफल
दंव्रतं ॥ ४ ॥ शस्त्रघातान्मृतायेचसलिलेवाकदाचन ॥ हयैर्वाताडितायेचगोवृषैः
कुंजरैश्चवा ॥ ५ ॥ वृक्षेभ्यःपतितायेचमृतायेचचतुष्पथे ॥ व्याघ्रैःसर्पैर्वराहैश्च
भक्षिताश्वापदैस्तथा ॥ ६ ॥ कुष्ठव्याधौमृतायेचमंचकोपरियेमृताः ॥ तूलिका
यांमृतायेचकंवलोपरियेमृताः ॥ ७ ॥ ब्रह्महाचैवगोघ्नश्चखलास्त्रीबालघातकाः
॥ जलाग्निबंधनान्नष्टास्तथैवात्मविहिंसकाः ॥ ८ ॥ विषैर्वैभक्षितंयैश्चप्रेतसंस्कार
लोपकाः ॥ संतानरहितायेचक्षयरोगेणयेमृताः ॥ ९ ॥ कंठेग्रासाविलग्नाश्चवृष्टिवि
द्युन्निपातिताः ॥ हतायेकरकाघातैःशवपातैर्मृताश्चये ॥ १० ॥ नाऽनाहारमृता
येचमार्गेश्रमनिपीडिताः ॥ बालायेमरणंप्राप्ताःशूलारोपणतोहताः ॥ ११ ॥



46

धे ॥ २४ ॥ ब्रह्मविष्णुशिवप्रीत्यैततःकुर्यान्नतर्पणम् ॥ दानानितत्रदेयानिछ
त्रोपानत्कमंडलुः ॥ २५ रजतंचसुवर्णंचताम्रंगोव्रीहयोयवाः ॥ तिलाः कृष्णा
स्तथामाषाःदेयादोषानुपत्तये ॥ २६ ॥अभिषेकंतयोकुर्युर्ब्राह्मणाः परितोषिताः
॥ पुण्याहवाचयित्वातुब्राह्मणान्भोजयेत्ततः ॥२७॥ विसर्जयेत्ततोदेवान्ब्रह्म
विष्णुशिवादिकान् ॥ दीनांधकृपणेभ्योथदेयमन्नंस्वशक्तितः ॥ २८ ॥ एवंकृते
प्रणश्यंतिभूतप्रेतादिसंभवाः ॥ ज्वरादिरोगसंभूतादोषाविष्णुप्रसादतः ॥२९ ॥
इष्टैःसहसुखंपश्चात्भुंजीतानियतः शुचिः ॥ नान्यत्साधनभूपृष्ठेपिशाचभयमुक्त
ये ॥ ३० ॥ ब्रह्मचारीभवेत्तांतुरजनींब्राह्मणैःसह ॥ श्राद्धमेवंकृतंयेनकृतकृत्यो
भवेत्सुखी ॥ ३१ ॥ त्रिपिंड्यायाःविधानस्यमहिम्नोंतोनविद्यते ॥ अतःसर्वे
षुकालेषुत्र्यंबकेतुविशिष्यते ॥ ३२ ॥ इतिगोदायात्राविवेकादर्शेत्रिपिंडीविधा
नंनवमप्रकरणं ॥ श्रीसांबसदासिवार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥
श्रीगणाधिपायनमः ॥ दाल्भ्यउवाच ॥ भगवन्ब्राम्हणाःकेचिदपमृत्युवशगं

र्ध्वदेहिकमाचरेत् ॥ २२ ॥ दाल्भ्यउवाच ॥ विप्रस्यार्थेत्वयादेवकथितायाबलि
क्रिया ॥ शेशवर्णाःकथंदेवपश्यंतिनरकंध्रुवम् ॥ २३ ॥ विष्णोवाच ॥ चतुर्वर्णे
नकर्तव्योबलिर्नारायणाभिधः ॥ विधानंपूर्ववर्णस्यदाहोनेनक्रमेणतु ॥ २४ ॥
नारायणबलिंसम्यकूयःकरोतिमृतस्यच ॥ प्रेतस्यापिचकर्ताश्चउभौतेफलभा
गिनौ ॥ २५ ॥ नतच्छ्रेयोग्निहोत्रेणअग्निष्टोमादिभिर्मखैः ॥ अपमृत्युर्विनष्टा
नांनारायणबलिःशुभः ॥ २६ ॥ अकृत्वैवबलिंविष्णोर्योनङ्वाहंविमुंचति ॥ सर्वं
मूर्ध्वंकृतंवापिनोपतिष्ठतितस्यतत् ॥२७॥ पुत्रोवाबंधुपुत्रोवापौत्रोवाबंधुरेवच ॥
स्वगोत्रश्चार्थभागीचकुर्यान्नारायणंबलिं ॥ २८ ॥ शिष्योवाऋणहर्तावाभार्या
वाभगिनीतथा ॥ जामातादुहितावापिकुर्यान्नारायणंबलिं ॥ २९ ॥ एतेऽधिका
रिणोमोहान्नकुर्वंतिबलिर्मम ॥ सर्वेतिष्ठंतिनरकेप्रेतेनसहदारुणे ॥ ३० ॥ अ
तस्तस्योपशांत्यर्थंबलिर्नारायणाभिधः ॥ येकुर्वंतिनरोराजन्तेषागतिरनुतमा
॥ ३१॥ नारायणबलिस्तार्क्ष्यशुक्लपक्षेथवाऽसिते ॥एकादश्यांपंचम्यांवाश्रवणे

विषूचिकामृतायेचमृताःकंठनिपीडनैः ॥ एकादशाकृतविपाःगतांदिंश्राद्धवर्जितः
॥ १२ ॥ हतैश्वान्यैश्चबहुभिर्मृयंत्तेवापमृत्युभिः ॥ गच्छंतिनरकेघोरेपूयशोणित
संकुले ॥ १३ ॥ बहुजंतुखगाकीर्णेलोहकंटकदुर्गमे ॥ अधोमुखाश्चतिष्ठंतिनराः
पापसमाकुलाः ॥ १४ ॥ नतेषांकार्य्येदाहंसूतकंनोदकक्रिया ॥ विधानंचश्चथो
र्ध्वंचनक्रियोर्ध्वाभिधायच ॥ १५ ॥ अंत्येष्टिंकारयेत्क्षिप्रंषण्मासाभ्यंतरेयथाक्र
मं तल्यप्राणिसंस्कारःशुभतीर्थंसमाश्रयेत् ॥ १६॥ गंगायांयमुनायांचपुष्करेनैमिषे
तथा ॥ गोदावर्यांकुशावर्तेत्रिसंध्याक्षेत्रभूमिषु ॥ १७ ॥ तन्नाम्नाकारयेत्तत्रब
लिर्नारायणःशुभः ॥ नोचेत्प्रेतत्वमापन्नाःकुलंपीडयंतिसर्वशः ॥ १८॥ संताननाशं
कुर्वंतिधनंहरंतिबांधवान् ॥ रोगंव्याधिंचकुर्वंतिशरीरेप्रविशंतिच ॥ १९ ॥ चेष्टाश्चवि
विधाश्चैवकुर्वंतिप्रसरंतिच ॥ स्वप्नेभीतिंकुर्वंतिभापयंतिस्ववंशजान् ॥ २० ॥
संबंधेनधनादीनांपीडयंतित्रासयंतिच ॥ गर्भभ्रंश्यतिशुक्रंचबालकान्घातयंति
च ॥ २१ ॥ विविधंपीड्यमनानांकुर्यान्नारायणोबलिः ॥ क्षिप्रंतेषांगतिंकुर्यादो

विष्णुमहादेवोयमश्चैवसकिंकरः॥ बलिंगृहीत्वातृप्यंतुप्रेतस्यचशुभांगतिं ॥ ४३
॥ संप्राप्यैवंप्रस्थमन्नमात्रमध्वाज्यशर्करा ॥ देयात्प्रत्येकमेतेषांतृप्यर्थंब्राम्हणेषु
च ॥ ४४ ॥ पुनर्ब्रम्हादिदेवान्स्तान्यथाविधिसमर्चयेत् ॥ एकोदिष्टविधानेन
पंचश्राद्धान्युपक्रमेत् ॥ ४४ ॥ सव्येनदेवतानांतप्रेतस्यात्रापसव्यकं ॥ अक्ष
य्यावसरेशंखतुलशीचतिलोदकैः ॥४५॥ धारापिंडेषुदातव्याप्रेतःसद्गतितेत्विति
उपतिष्ठतामनुष्मैतुप्रेतायैदंतिलोदकं ॥ ४६ ॥ अनादिनिधनोदेवःशंखचक्रग
दाधरः ॥ अक्षय्यपुंडरीकाक्ष;प्रेतमोक्षप्रदोभव ॥ ४७ ॥ ततस्तुदक्षिणादद्याद
धिकाप्रेतमुद्दिशन् ॥ समाप्तेकर्मणिज्ञात्वायस्यस्मृत्येतिमंत्रतः ॥४८ ॥ भोज
येद्ब्राह्मणान्पश्चात्पायसैःस्वजनैःसह ॥ यएतत्क्रियतेविष्णोर्बलिसंज्ञंविधान
कं ॥ यथावित्तंयथाकालंलौकानंत्यायकल्पते ॥ यंयंचिंतयतेकामंतंतंप्राप्नोति
निश्चितं ॥ ४९ ॥ इतिगोदायात्राविवेकादर्शेनारायणबलिप्रकरणम् ॥ १ ॥
श्रीरस्तु ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥ ॥

वाविशेषतः ॥ ३२ ॥ त्रिपादपंचकंवर्ज्यंप्रारंभेतुबलिद्वये ॥ अन्यदोषस्यसंप्राप्ति
रस्मिन्कार्येनदुःखकृत् ॥ ३३ ॥ प्रातःस्नानंप्रकुर्वीतकुशावर्तेसमाहितः ॥ संध्यां
संप्राप्यसंतर्प्यदेवर्षिपितृबांधवान् ॥ ३४ ॥ प्रणम्यत्र्यंबकंदेवंसदारंसगणान्वित
म् ॥ आज्ञांलब्धाद्विजेंद्रेभ्योअहल्यासंगमंव्रजेत् ॥ ३५ ॥ देशकालादिसंकी
र्त्यसंकल्पंतुसमाचरेत् ॥ विप्राणामंत्र्यविदुषोब्रह्माविष्णुशिवान्यमं ॥ ३६ ॥
प्रेतंचपंचकुंभेषुस्थाप्यतेषुयथाविधि ॥ एतेषांप्रतिमाःकार्याःस्वर्णाद्यैःशक्तितःख
ग ॥ ३७ ॥ कुंभाःपंचजलस्वर्णगंधपल्लवतत्फलैः ॥ दूर्वासर्वौषधीर्युक्तावस्त्रयुग्मैर
लंकृता. ॥ ३८ ॥ पंचधान्येषुसंस्थाप्यास्तेकुंभास्वस्वमंत्रिताः ॥ तेषामुपरि
ब्रह्मादीन्पूजयेत्विधिपूर्वकम् ॥ ३९ ॥ हिरण्यगर्भंपुरुषसूक्तकंरुद्रकायच ॥ य
मायसोममितिचमंत्राप्रेतंस्वनामतः ॥ ४० ॥ संपूज्याथस्वगृह्योक्तविधिनाधा
यपावकं ॥ चरुंनारायणायाथहुत्वापुरुषसूक्ततः ॥ ४१ ॥ प्रत्यर्चंषोडशर्चेनसू
क्तेनशंखवारिणा ॥ गोत्रनाम्नाविष्णुरूपीप्रेतस्तृप्यत्वितिब्रुवन् ॥ ४२ ॥ ब्रम्ह

49

॥ १० ॥ कलौप्रेतत्वमाप्नोतिताक्ष्यशुद्धक्रियापरः ॥ कृतादौद्वापरांतेचनप्रेतोनै
वपीडनं ॥११॥ बहुनामेकजातानामेकःसौख्यसमश्नुते ॥ एकोदुष्कृतकर्माचए
कःसंततिभाजनः ॥ १२ ॥ एकःसंपीडयतेप्रेतैरेकोधनसमन्वितः ॥ एकस्यपु
त्रनाशस्यादेकोदुहितरंलभेत् ॥ १३ ॥ विरोधोबंधुभिःसार्द्धंप्रेतदोषास्त्विमेख
ग ॥ संततिर्दृश्यतेनैवसमुत्पन्नांविनश्यति ॥१४॥ प्रकृतेस्तुविपर्यासोवितृविपः
सहबंधुभिः ॥ पशुद्रव्यविनाशस्यात्सापीडाप्रेतसंभवा ॥ १५ ॥ नास्तिक्यंवृ
त्तिलोपश्चमहालोभस्तथैवच ॥ अकस्माद्व्यसनावाप्तिःसापीडाप्रेतसंभवा ॥
॥ १६ ॥ पितृमातृगुरुद्रोहीदेवब्राह्मणानिंदकाः ॥ हत्याहोषमवाप्नोतिसापीडा
प्रेतसंभवा ॥ २७ ॥ सुभिक्षेकृशिनाशस्याद्व्यवहारोविनश्यति ॥ लोकेकलह
कारिचसापीडाप्रेतसंभवा ॥ १८ ॥ हीनजात्याचसंबंधोहीनकर्मकरोतिच ॥
अधर्मैरमतेनित्यंसापीडा० ॥ १९ ॥ व्यसनेद्रव्यहानिस्याद्वुपक्रांतविनश्यति॥ ॥४६
चोराग्निराजकोहानिःसापीडा० ॥ २०॥ महारोगोपपत्तिश्चस्वतनोःपतनंयतः

श्रीशंवंदे ॥ अथपालाशविधिः ॥ भगवानुवाच ॥ देशांतरेमृतायेच कर्मसंस्कार
लोपकाः ॥ कर्तव्यस्तस्यशांत्यर्थंविधिःपालाशसंज्ञकः ॥ १ ॥ नकरोतियदामो
हाल्लोभात्कामादथापिवा ॥ तदामर्त्योभवेत्प्रेतोह्यौर्ध्वदेहिकलोपकृत् ॥२॥ नते
नव्यवहर्तव्यंपानभोजनयाजनैः ॥ योनकुर्यान्मृतेःश्राद्धंसभवेत्पंक्तिदूषकः॥ ३॥
मृतेभवंतितेप्रेतोनोद्धरंतिकदाचन ॥ पीडांकुर्वंतितेप्रेताःयथावत्शृणुसत्तम॥४॥
॥ गरुडउवाच ॥ कथंकुर्वंतितेप्रेताःकेनरुपेणकस्यकिं ॥ ज्ञायंतेकेनविधिना।किं
जल्पंतिवदंतिकिं ॥ ५ ॥ एनंछिंधिमनोमोहंममचेदिच्छसिप्रियं ॥ कलिकालेहृ
षीकेशप्रेतत्वंजायतेबहु ॥ ६ ॥ श्रीभगवानउवाच ॥ स्वकुलंपीड्येतेप्रेतःपरंछि
द्रेणपीडयेत् ॥ जीवतोह्यस्यतोस्नेहात्मृतेदुष्टत्वमाप्नुयात् ॥७ ॥ रुद्रजापीधर्म
रतोदेवतातिथिपूजकः ॥ सत्यवाक्प्रियवादीचनसप्रेतैःप्रपीड्यते ॥ ८ ॥ गाय
त्रीजाप्यनिरतोवैश्वदेवक्रियापरः ॥ श्राद्धकृत्तीर्थसेवीचनसप्रेतैःप्रपीड्यते ॥ ९॥
सर्वकर्मपरिभ्रष्टोनास्तिकोवेदनिंदकाः ॥ असत्यवादीद्वेषीचनरःप्रेतैःप्रपीडयते॥

ठविधिःपर्णशरोच्यते ॥३२॥ अनामत्वाच्चतच्छांत्यैद्विजश्रेष्ठनिशम्यतां ॥ नारा
यणाभिधातस्यगोत्रेकाश्यपसंभवे ॥ ३३ ॥ पुत्तलंतत्रपालाशवृंतंषष्टिशतत्रयं ॥
चत्वारिशांच्छिरोदेशेग्रीवायांदशविन्यसेत् ३४ ॥ विंशतिर्वक्षसितथाजठरेचापि
विंशति. ॥ बाहुभ्यांचशतार्धंस्यात् दशहस्तांगुलीषुच ॥३५॥ जान्वोस्तुशतकंद
द्यात्रिंशतंजंघयोर्द्वयोः ॥ एकैकमंगुलिस्थानेदशगुह्येप्रकल्पयेत् ॥ ३६ ॥ मस्त
केनारिकेलंचतालुकेलाबुविन्यसेत् ॥ पंचरत्नंमुखेन्यस्याजिंव्हायांकदलीफलं ॥
॥३७॥ चक्षुषोस्तुकपर्दौव्देबुब्बुलेगुंजिकाद्वयं ॥ कर्णयोस्तालपत्रंचनासिकायां
तुतूलकं ॥ ३८ ॥ नालकंकमलानांतुअंत्रस्थानेविनिक्षिपेत् ॥ मृत्तिकातुवसा
धार्थंहरितालिकगंधकं ॥ ३९ ॥ श्रुक्रेतुपारदादिष्टपुरीषेपित्तलंतथा ॥ यवपिष्ट
स्तथामांसेतिलपिष्टंतु संधिषु ॥४०॥ मधुस्याच्छोणितस्थानेत्वचिकुर्यात्मृग
त्वचं ॥ स्तनयोर्गुंजिकादद्यात्कमलंनाभिमंडले ॥ ४१ ॥ वृंताकंवृषणद्वंद्वं ॥४५॥
लिंगगर्जरमेवच ॥ परिधानंउष्णसूत्रैरुपवीततथोत्तम ॥४२॥ सर्वौषधियुतंप्रे

जायासंपीडयतेयत्रसापीडाप्रेतसंभवा ॥ २१ ॥ गृहदत्तकलिश्चैवभोजनेको
पसंयुतः ॥ परद्रोहमतिश्चैवसापीडाप्रेतसंभवा ॥ २२ ॥ स्त्रीणांगर्भविनाश
स्यान्नपुष्पदृश्यतेतथा ॥ बालानांमरणंयत्रसापीडाप्रेतसंभवा ॥ २३ ॥ पित्रो
र्वाक्यंनकुरुतेस्वपत्नींचनसेवते ॥ सदाक्रूरमतिर्व्यग्रःसापीडा॰ ॥२४ ॥ वियो
गेजायतेचित्तंसदोच्चाटपरंन्टणां ॥ स्वक्षेत्रेनिष्फलंवीर्यंसापीडाप्रेतुसंभवा ॥२५
पित्राविवादोमात्राचपुत्रैर्वाभार्ययासह ॥ गुरुणावाथशिष्येणसापीडा॰॥२६॥
औषधिःसेव्यमानैश्चरोगनाशोनजायते ॥ पथ्याशनविधानेनसापीडा॰॥२७॥
नारीणांसमयेपुष्पंफलंवापिनजायते ॥ गर्भसंस्त्रावपातौचसापीडाप्रेतसंभवा॥
२८॥स्त्रीप्रसुत्वमपुत्रत्वंदंपत्योःप्रतिकुलता ॥दत्तानांकलहश्चैवसापीडाप्रेत.॥२९
मित्राण्यमित्रतांयांतिपथ्यंचविषतांव्रजेत् ॥ प्रेतकोपेसमुत्पन्नेतस्मात्प्रेतान्नको
पयेत् ॥३०॥ एवंज्ञात्वाखगश्रेष्ठप्रेतमुक्तिंसमाचरेत् ॥ योवैनमन्यतेप्रेतान्मृतत्र
तत्वमाप्नुयात् ॥ ३१ ॥ प्रेतदोषंकुलेयत्रसुखंतत्रनविद्यते ॥ तच्छांत्यर्थंखगश्रे

धरणींवापिपाषाणप्रहृतोऽथवा ॥ ३ ॥ तस्यपापस्यशांत्यर्थंकार्योंनागवलिर्मुने
नंदिकेश्वरउवाच ॥ ४ ॥ विष्णोर्नारायणबलेस्तथानागबलेरपि ॥ विधानं
चकथांराजनूदाल्भ्योविस्तरेणच ॥ श्रुत्वासविस्मयाविष्टोमुनिस्वैरगतिर्ययौ
अथकालेनबहुनादाशार्णाधिपतिंप्रति ॥ सुहोत्रंनामराजानंदाल्भ्योमुनिसत्तमः
यदृच्छयाजगामाशुसत्कृतस्तेनभूभृता ॥ ७ ॥ विश्रांतिंपरमांप्राप्तुंमुनिराजाब्र
विदिदं ॥ ८ ॥ सुहोत्रउवाच ॥ अद्यमेसफलंजन्मदाल्भ्यमुनिसत्तम ॥कालेन
बहुनादृष्टंमयात्वत्पदपंकजम् ॥ ९ ॥ वार्धक्यंममसंप्राप्तंचिंतामुर्विप्रवर्तते ॥
अद्यापिपुत्रकन्यावाजायतेनद्विजोत्तम ॥ १० ॥ प्रायःकुलांतोभविताकेनेयम
नपत्यता ॥ पातकेनमयाप्राप्तावजानेकिंकृतंमया ॥ ११ ॥ इहजन्मनिपूर्वेवादु
ष्कृतंतद्विचार्यताम् ॥ भूतंभव्यंभविष्यंवाजानासितपसामुने ॥ १२ ॥ नंदिके०
॥ उपस्पृश्यजलंराजनूदाल्भ्योमुनिसत्तमः ॥ मुहूर्तंध्यानमाश्रित्यसुहोत्रंनृप
तिजगौ ॥ १४ ॥ दाल्भ्यउवाच ॥ राजनूपूर्वभवेचासीतूनिषादोभीपणाव्हयः

तंकृत्वापूजांयथोचितां॥ पूर्वसंकल्पितद्रव्यैर्दक्षिणांतुसमर्पयेत् ॥ ४३ ॥ प्रेतमु
द्दिशदानानितिलादीन्यष्टदीयते ॥ तिलंलोहंहिरण्यंचकार्पासंलवणंतथा ॥ सप्त
धान्यंक्षितिर्गावोएकैकंपावनंस्मृतं ॥ ४४ ॥ दत्वावैतरणींधेनुंविष्णुंस्मृत्वाग्नि
नादहेत् ॥ ४५ ॥ विधिरष्टमहादानपूर्वकोयमुदाहृत ॥ सर्वदुर्मृतिसंजातदुर्ग
त्युत्तारणायवै॥नारायणबलिःकार्योविधिस्तस्यनिगद्यते॥४६ ॥ इतितेकथितं
तार्क्ष्यभूतबाधाप्रशांतये ॥ आस्तेसर्वत्रसुलभोदुर्लभंत्र्यंबकस्थलं ॥ ४७ ॥ पि
तुराज्ञांपुरोधायकृतोधर्मेणवैपुरा ॥ त्रिशंकुस्वर्गकामेणहरिश्चंद्रेणवैकृतः ॥ ४८
॥ विधित्रयप्रसंगेणमयासंप्रार्थितःशिवः ॥ सार्धसुदर्शनैःसांबपुत्ररत्नमवाप्तये॥
४९ ॥ इतिश्रीगोदायात्राविवेकादर्शेपालाशविधिप्रकरणं॥ २॥ ॥ श्रीरस्तु ॥
अथनागबलिविवरणं ॥दालभ्यउवाच॥ कुतोनागबलिःकार्यःतेनकिंदेवजायते ॥
॥ १ ॥ विष्णुरुवाच ॥इहजन्मनिपूर्वेवासप्तजन्मसुवामुने ॥ कृतसर्पवधोयेनमा
रितोदंशितोप्यथ ॥ २ ॥ दाहितःपाशितःपीडीदमितःकर्षितस्तथा ॥ क्षपितो

श्रीपुत्रिकायुक्तोधनधान्यसमन्वितः ॥ भुनक्तिभोगानखिलान्अंतेमोक्षमवाप्तवा
न् ॥ २६ ॥ नंदिके० ॥ श्रुत्वासुहोत्रनृपतिःपरमादरेणदृष्ट्वाविधानमकरोत्सव
लिङ्गयंच ॥ श्रीत्र्यंबकंप्रतिययौमुनिवाक्यतोऽसौयद्यद्विधानमथदानमदात्समस्त
म् ॥२५॥ इतिश्रीगोदायात्राविवेकाऽदर्शेनागवल्लीदशमविवरणं ॥ १० ॥ छ ॥
श्रीगणेशायनमः ॥ अथब्रह्मगिरिप्रदक्षिणाविवरणं ॥ पाद्मे ॥ श्लोक ॥ अतः
परंब्रह्मगिरेःप्रदक्षिणामाहात्म्यमाविष्कुरुनंदिकेश्वर ॥ नतृप्तिमायांतितवांबुजा
ननान्निपीयविश्वेशकथामृतान्यपि ॥ १ ॥ सूतउ० ॥ संप्रश्नमाकर्ण्यनराधि
पस्यप्रेम्णाप्रमोदार्द्रतनुर्गणेशः ॥ स्मृत्वासनाथांघ्रिसरोजयुग्मंबभूवतूष्णींनिप
तन्जगत्यां ॥ २ ॥ ततःसमुत्थायघटीद्वयेनविमृज्यनेत्रेवसनांचलेन ॥ प्रचक्र
मेब्रम्हगिरेः प्रदक्षिणामाहात्म्यमाख्यापयितुंसनंदी ॥ ३ ॥ नंदिकेशउ० ॥ आ
लोकितानिजगतीतलसंस्थितानितीर्थानिदेवमुनिदानवनिर्मितानि ॥ नालो
कितंतदपिब्रम्हागिरेःसमानंक्षेत्रंभवांबुधिनिमग्नजनस्यतर्तुं ॥ ४ ॥ नवक्रो





S2

अरण्येभ्रमताद्दष्टोऽजगरोभुजगाधिपः ॥ १४ ॥ नपादाधिपतेर्भार्यांग्रसमानो यदृच्छया ॥ एकाकिनींत्यज्यमानांनलेनगहनेवने ॥ १५ ॥ रोरूयमाणांदृष्ट्वा तांकारुण्यार्द्रतनुर्भवान् ॥ शरैरपीडयत्सर्पमानुपादंमहीयते ॥ १६ ॥ भक्ष्यमाणापिसातेनानिर्गीर्णाशरपीडया ॥ सगाढवेदनायुक्तोमृतःसर्पोमहावने ॥ १७॥ दमयंतीमहाराजत्वामाशीभिरपूजयेत् ॥ तस्याशीर्वचनादेवजातोद्यत्वंमहीपतिः ॥ १८ ॥ परोपकारपुण्येनराज्यंप्राप्तंत्वयाविदं ॥ तत्सर्वघातजंपापंतेनत्वंनिरपत्यवान् ॥ २० ॥ तस्यपापस्यशांत्यर्थंकुरुनागबलिंनृप ॥ २१ ॥ सुहोत्रउवाच ॥ सर्पघातोद्भवंपापंयदिनागबलौकृते ॥ गमिष्यतिकुतःकार्योनारायणबलिर्मम ॥ २२ ॥ दालभ्यउ० ॥ कार्योनारायणबलिः नानासंबंधनाशक. ॥ तथा नागबलिंश्रीमन्सर्पसंघातपापहृत् ॥ २३ ॥ इमौयःकुरुतेभक्त्याबलीद्वौपापनाशकृत् ॥ बौधायनस्मृतौराजन्अनयोस्तुविधानकम् ॥ २४ ॥ येतुनागबलिंराजन्कुर्वंतित्र्यंबकेनराः ॥ नागस्यदर्शनंतेषांयत्रकुत्रापिजायते ॥ २५ ॥ अपु

अष्टादशविधंकुष्टंशूलानांचशतत्रयं ॥ राजयक्ष्मादयोरोगादारिद्रंसप्तजन्मजं ॥
१६ ॥व्याघ्रचौराग्निपीडाश्चसिंहानांशत्रुणांतथा ॥ सर्वंतद्विलयंयातिमोक्षार्थी
मोक्षमाप्नुयात् ॥ १७ ॥ अथकिंबहुनोक्तेनजिव्हायाःवलनेनच ॥ धर्मेचार्थेच
कामेचैमोक्षंचनृपसत्तम ॥ १८ ॥ अनयासदृशोऽपायोनान्योस्तीतिमतिर्मम
॥ ब्राम्हेमुहूर्तेचोत्थायचिंतयन्नात्मनोहितत् ॥ १९ ॥ अथपंचदिनक्रमप्रदक्षिणाःवि
धिः ॥ अथकर्ताप्रातरुत्थायभक्त्याभगवंतंपशुपतिंध्यायेत् ॥ तत्रमंत्रः ॥ ध्याये
न्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्वलांगंपरशुमृगवराऽभीति
हस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यं
निखिलभयहरंपंचवक्त्रंत्रिनेत्रम् ॥ १ ॥ इतिध्यात्वा॥ ॐपशुपतयेनम इतिनाममंत्रेण
॥नत्वा॥ कृतशौचविधिः ॥ श्रीकुशावर्ततीर्थेस्नात्वा कृतनियमक्रमः महानियममा
स्थायप्रदक्षिणांकर्तुमुपक्रमेत् ॥ तत्रादौश्रीत्र्यंबकेश्वरंप्रार्थयेत् ॥ १ ॥ प्रार्थनामंत्रः
॥श्लोक॥एतत्प्रदक्षिणंकुर्वन्क्षेत्रंतवमहेश्वर ॥ धर्मार्थकामसंसिध्यैशक्तिंदेहिप्रसी
दमे ॥ २ ॥ देहेंद्रियमनःप्राणचेतनोऽखिलजीविनः ॥ भगवन्प्रेरयत्वंमांयन्मेसर्वं

शात्मकंक्षेत्रंत्र्यंबकस्यप्रतिष्ठितं ॥ एकप्रदक्षिणायस्तुमुच्यतेब्रम्हहत्यया ॥
५ ॥ अतोमयाकथंवक्तुंशक्यतेनृपसत्तम ॥ तथापिकिंचित्तेराजन्लेशमात्रं
वदामितत् ॥ ६ ॥ त्रिभिःपरिक्रमैःप्रोक्ताब्रम्हाद्रेस्तुप्रदक्षिणा ॥ षट्पंच
प्रक्रमैप्रोक्तामहतीसानृपोत्तम ॥ ७ ॥ षट्पंचमहतीभिस्तुप्रोच्यतेतिप्रदक्षि
णा ॥ एवंसाविविधाप्रोक्ताकोटिहत्याविनाशिनी ॥ ८ ॥ महापातकना
शायप्रायश्चित्तंपरंहिसा ॥ ब्रम्हहामद्यपःस्तेयीतथैवगुरुतल्पगः ॥ ९ ॥
॥ महापातकिनस्त्वेतान्संसर्गीचैवपंचमः ॥ एतेषांतुविनाशार्थंब्रह्माद्रेस्तुप्रद
क्षिणा ॥ १० ॥ ब्रह्मविष्णुशिवद्राणांत्रिंशत्क्रोशाप्रदक्षिणा ॥ अशक्तत्वान्मनु
ष्याणांदुर्लभासाकलौयुगे ॥ ११ ॥ अतःसानृपशार्दूलविशेषान्नोच्यतेमया ॥ न
वक्रोशात्मकाप्रोक्ताब्रम्हाद्रेस्तुप्रदक्षिणा ॥ १२॥ महिमानंप्रब्रवीमितस्याशृणुम
हीपते ॥ नतयासदृशंकिंचित्पुण्यंपापविनाशनं ॥ १३ ॥ ब्रम्हहामुच्यतेपापा
त्अन्येषांतत्रकाकथा॥ अपुत्रःपुत्रमाप्नोतिबध्दोमुच्येतबंधनात्॥ १४ ॥ पिशाच
ग्रहग्रस्तोविमुच्यतेतिदुःखतः ॥ अक्षिरोगाशिरोरोगाः[illegible]एवच ॥ १५॥

कृत्यदेवताग्रेप्राङ्मुखोंजलिंबध्वा ॥ श्रीहनूमंतंप्रार्थयेत् ॥ तत्रमंत्राः ॥ पराक्रमसमाक्रांतदिङ्मंडलमहाबल ॥ यशोधौतत्रिभुवनगोष्पदीकृतवारिधे ॥ १ ॥ लंकाविदाहनोग्रास्यग्रस्तराक्षसकानन ॥ लंकेशवंशविपिनप्राणनाशविभाकर ॥ २ ॥ रामोपकारकश्रीमन्सीताश्वासनपंडित ॥ अंजनागर्भसंभूतरूद्ररौद्रवपुर्धर ॥ ३ ॥ लक्ष्मणप्राणदप्राणनाथानाथैकपालक ॥ वीरमांपाहिदेवेशहनूमन्कपिनायक ॥ ४ ॥ त्वंप्राणदोसिबलदप्राणप्राणभृतामसि ॥ पुण्यंदेहिबलंकीर्तिंकामान्देहिहराशुभं ॥ ५ ॥ इतिसंप्रार्थ्यप्रदक्षिणंपरिक्रम्य ॥ तदनुज्ञांगृहीत्वाश्रीगंगामुल्लंघ्यगणेशंप्रणम्यमंदंमंदंप्रयागतीर्थंव्रजेत् ॥ तत्रस्नात्वावेणीमाधवंपूजयित्वा ॥ शिरस्स्नानस्वातत्रत्यंअक्षय्यवटंप्रदक्षिणीकृत्यसंपूज्य ॥ तीर्थश्राद्धक्रमेणश्राद्धंकृत्वाब्राह्मणभोजनंचकृत्वातेभ्यः शक्तितारतम्येनहिरण्यगोवस्त्राणिवातान्निष्क्रयद्रव्यंचदत्वास्वयंभुंजीत ॥ दिवसशेषेतत्कथादिश्रुत्वा ॥ अथ कथा ॥ श्रीशिवदं ॥ पुराकृतयुगेकश्चित्सुजरोनामविश्रुतः ॥ वैश्यवंशसम्भूतो





54

करोमितत् ॥ इतिसंकल्प्य ॥चित्ते त्र्यंबकेशंस्मरन् मौनादिनियमंविधाय शांतःस प्राकारंकुशावर्ततीर्थंशजन् सप्तवारं त्रिवारं वा प्रदक्षिणीकृत्य ॥ गोदावरींचतुर्भु जांसस्मितास्यांप्रणम्य स्वदक्षिणतःकृत्वा ॥ मार्गस्थतीर्थदेवताश्चप्रणमेत् ॥ श्रीत्र्यंबकेश्वरप्रासादंगच्छेत् ॥ तत्र प्रासादप्रदक्षिण विधाय तत्रत्याः नंदिके श्वरप्रभृतिदेवताः नाममंत्रेणनत्वा॥ श्रींत्र्यंबकेश्वर×व्यासस्थानं गत्वा ॥पूर्वाभि मुखोभूत्वा ॥ श्रीत्र्यंबकेश्वरं यथामीलितोपचारैः संपूज्य ॥ बहिरागत्यसप्तकृ त्वास्त्रिकृत्वोवाप्रासादंपरिक्रम्य ॥ प्राङ्मुखःश्रीविष्णवेनमः देवऋषिभ्योनमइ ति॥ नाममंत्राभ्यांप्रणम्यप्रासादपूर्वद्वारेणबहिर्निर्गत्य ॥ ॐक्षेत्रपालायनमइति क्षेत्रपालंनत्वा *महानियममास्थाय॥हनूमंतंगच्छेत्॥प्रथमं तत्प्रासादं प्रदक्षिणी

× यत्र प्रदेशमध्ये मुख्यदेवतास्थितिः सप्रदेशो व्यासस्थान

॥ * अपवित्रमार्गेयदाऽगमनप्रसंगे निष्ठीवनमूत्रपुरीषोत्सर्गवमनादिवेगप्राप्तौ तत्परिहारः ॥ स्ववामभागेत्यक्त्वाकार्यःतत्रशुद्धिःनिष्ठीवनेगंडूषः ॥ मूत्रोत्सर्गे हस्तपादधावनंआचमनं.मलोत्सर्गेस्नानाऽचमनप्राणायामाः॥ इतिमहानियमाः

गाख्यंपरंतीर्थंतत्रगत्वानमाज्ञया ॥ सर्वान्पितॄन्समुच्चार्यश्राद्धंकुरुयथाविधि ॥
१२॥तेनपुण्यप्रभावेनस्वर्गेयास्यंतिपूर्वजाः ॥नंदिके०॥ वसिष्ठस्यवचःश्रुत्वाप्रया
गंसुजरोययौ ॥१३ तत्रश्राद्धंविधायैवस्वपितॄनानयद्दिवं ॥ सर्वेविमानमारूढादि
व्यदेहाः सुवाससः ॥ १४ ॥ वर्णयंतःप्रयागाख्यंशिवलोकंसमाययुः ॥ दृष्टातीं
र्थस्यमाहात्म्यंसुजरोपिनरोत्तम ॥ १५ ॥ यावज्जीवंचतत्रैवतस्थौस्नानरतःसदा
॥ तत्रावसानंसंप्राप्यशिवलोकंसमाययौ ॥ १६ ॥ यःशृणोतिनरोभक्त्यासर्वपा
पैःप्रमुच्यते ॥ अतःप्रयागतीर्थस्यमहिम्नोंतोनविद्यते ॥ १७ ॥ इतिश्रीपद्मपुरा
णेत्र्यंबकमाहात्म्येप्रयागतीर्थविधिमहिमाकथनंनामाध्यायः ॥ १ ॥ श्रीसांबस
दाशिवार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥
गद्यं ॥ इत्यादिकथांश्रुत्वासायंसंध्यांविधायरात्रौपुराणश्रवणगीतमंगलवादित्र
हरिहरनामकीर्तनघोषैःसर्वांनिशांनयेत् ॥ द्वितियादिनेप्रातःतत्रैवस्नात्वासंध्यादि
कृत्वावेणीमाधवंअक्षय्यवटं प्रयागेश्वरंप्रणम्यतेषामनुज्ञांगृहीत्वा शनैःशनैर्नाग

ब्रह्मचर्यरतःसदा ॥ १ ॥सदारान्नकरोद्वैश्योब्रह्मचर्यपरायणः ॥ तीर्थयात्राप्रसंगे
णभ्रमन्पृथवींससागरां ॥ २ ॥ अतीववयसातीतोव्रजन्मार्गेशनैःशनैः ॥ क
दाचिदपत्तद्गर्तेमंदचक्षुःसवैश्यराट् ॥ ३ ॥ तत्रपश्यद्बहून्दीनान्कुशमूलावलंबि
तान् ॥ केयूयमितिसंपृष्टास्तमूचुस्तेहतोजसः ॥ ४ ॥ वयंसुजरसःपूर्वेपिंडविच्छे
ददर्शिता ॥ पतामोनरकेघोरेतमिस्त्रेयमशासनात् ॥ ॥ किमस्मान्पृच्छसेतातह
ताशान्हतजीवितान् ॥ इतितद्वचनंश्रुत्वासुजरोदुःखितोभवत् ॥ ६ ॥ निपपात
महीपृष्ठेवाताहतइवद्रुमः ॥ ७ ॥ ततःसमाश्वास्यनिजान्पितॄन्स्वयंवसिष्टविप्र
र्षिगृहंप्रयातः ॥ मत्पूर्वजानांचगतिर्यथाभवेत्तथावदत्वंसुजरोवदन्मुनिं ॥ ८ ॥
वशिष्टउ० ॥ संतानवर्धनात्तातमुच्येरन्पूर्वजास्तव ॥ वैश्यवर्यविवाहंचकृ
त्वागार्हस्थमाचर ॥ ९ ॥ सुजरोउ० ॥ वृद्धोहंवयसातीतोनकुर्यांदारसंग्रहं
॥ उपायमन्यंविप्रर्षेवदमांशरणागतं ॥ १० ॥ वसिष्टकृपयातस्मैप्रेषयन्त्र्यंब
कंप्रति ॥ वसिष्टउ० ॥ त्र्यंबकात्पूर्वतोभागेक्रोशमात्रंहिविद्यते ॥ ११ ॥ प्रया

विचारंतत्रचक्रिरे ॥ ५ ॥ किंकूर्मःक्वचगच्छामःसीताशुध्दिःकथंभवेत् ॥ कुंभक
र्णादयस्तस्यभ्रातरोतीवदुर्जनाः ॥ ६ ॥ रावणेनयदासीतानीतासावामृतातदा
अथवासागरंतीर्त्वालंकांगत्वाचमृग्यतां ७ तादृशःपुरुषःकोस्तियस्तरेन्मकराल
यं ॥ सागरोबहुगंभीरःशतयोजनविस्तृतः ॥ ८ ॥ क्रोशमात्रमितामच्छास्तेतुना
म्नातिमिंगिलाः ॥ तिंमिंगिलागिलोप्यस्तितद्गिलोप्यस्तिराघवः ॥ ९ ॥ षटक्रो
शाश्चनवक्रोशाःमच्छाःसंतिहिसागरे ॥ यथाकथंचित्कश्चिच्चेद्दैवात्पारंगमिष्यति ॥
१० ॥ कुंभकर्णादिभिर्वीरैर्लंकासंरक्षितानिशं ॥एवंवदत्सुयोद्धेषुदीर्घंनिश्वास्यरा
घवः ॥ ११ ॥ उच्चैस्तत्रस्वनंकृत्वाहासीतेतिरुरोदह ॥ रामस्यरुदितंश्रुत्वातत्रा
गत्यांजनावदन् ॥ १२ ॥ अंजनोवाच ॥ रामराममहाबाहोधैर्यंधेहिजगत्प्रभो ॥
मारामरोदनंकार्षीश्वःप्रयास्यतिजानकी ॥ १३ ॥ ममगर्भसमुद्भूतोवायुपुत्रोम
हाबलः ॥ हनूमान्नामविख्यातोत्थास्तिपंचदिनात्मकः ॥ १४ ॥ यस्मिन्पुत्रेसमु
त्पन्नेवागुवाचाशरीरिणी ॥ अयमेकादशोरुद्रःतवपुत्रोमहाबलः ॥ १५ ॥ एकेननि



56

तीर्थवंदनंकृत्वा सरस्वतींप्रणमेत् ॥ श्लो० ॥ मार्गेतरानदीप्राप्तास्नानादिपरपार
तः ॥ अर्वागेवसरस्वत्याएषमार्गगतोविधिः ॥ १ ॥ इतिप्रमाणेनस्नानतर्पणदे
वतार्चनंकृत्वाअंजनातीर्थेवंदनंसप्रदक्षिणीकृत्यरामतीर्थंगच्छेत् ॥ तत्रतीर्थेस्नात्वा
मध्यान्हसंध्यांब्रम्हयज्ञतर्पणंचविधायश्रीसलक्ष्मणंरामंसपरिवारंअभ्यर्च्यंतत्ती
र्थनामोहेनपूर्ववत् श्राध्दंकृत्वाब्राह्मणान्भोजयित्वाअनेनश्राध्देनश्रीरामःप्रीयता
मितिनिवेद्यस्वयंभुंजीत ॥ भोजनानंतरअवकाशेनश्रीरामकथाश्रोतव्या ॥ नतुग्रा
म्यगोष्ठिभिःकालंयापयेत् ॥ श्रीरामकथालिख्यते ॥ श्रीशंवंदे ॥ नंदिकेशउ० ॥
रामतीर्थेनरःस्नात्वासर्वपापैःप्रमुच्यते ॥ तत्रस्नानंचदानंचमुक्तिदंनात्रसंशयः ॥ १
॥ सीतायांनीयमानायांरावणेनदुरात्मना ॥ रामःपंचवटींहित्वासानुजःकाननंययौ
॥ २ ॥ तत्रपंपासरोदृष्टंप्रफुल्लजलजान्वितं ॥ क्षणंविश्राममकरोत् पयःपीत्वा
चतत्तटे ॥ ३ ॥ एतस्मिन्नंतरेतत्रसुग्रीवोवानरैःसह ॥ पंपासरःसमागत्यरामपा
दौननामसः ॥ ४ ॥ रामसुग्रीवयोःप्रीतिर्वर्धतेतत्रातिष्ठतोः ॥ तस्मिंश्चसमयेसर्वे

तपस्तपमहामते ॥ २६ ॥ अल्पेनैवचकालेनतवासिद्धिर्भविष्यति ॥ नंदिके० ॥
रामोपितद्वचःश्रुत्वाब्रह्माद्रेःसन्निधिंययौ ॥ २७ ॥ नित्यमाराधयामासशंकरं
लोकशंकरं ॥ अल्पेनैवचकालेनपरितुष्टःसदाशिवः ॥ २८ ॥ उवाचवचनं
प्रीत्यारामसमालिंग्यसत्वरं ॥ तथाचयदेदत्तुभ्यंयद्यपिस्यात्सुदुर्लभं ॥ २८ ॥ राम
उवाच ॥ शत्रुंनिर्जित्यसंग्रामे जानकीममहस्तगा ॥ यथाभवेत्तथादेहिवरंवरवि
शारद ॥ २९ ॥ शंकरोपितथेत्युक्त्वापुनःराममुवाचह ॥ त्वयेदंस्थापितंलिंगंत्वन्ना
म्नाख्यातिमेष्यति ॥ ३० ॥ महापापहरंनामरामतीर्थंभविष्यति ॥ अत्रस्नानंचदा
नंचकोटियज्ञफलप्रदं ॥ ३१ ॥ अत्रश्राद्धंप्रकर्तव्यंपितृणांतृप्तिहेतवे ॥ रामतीर्थस
मंतीर्थंनास्तिलोकेचराचरे ॥ ३२ ॥ अत्रयत्कल्पितंचित्तेतत्कोटिगुणितंभवेत् ॥
इदंसन्यासिभिःसेव्यंयतस्तेसंगवर्जिताः ॥ ३३ ॥ इतिगोदायात्राविवेकादर्शेप्रद
क्षिणामाहात्म्येरामतीर्थवर्णनाध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥
॥ श्रीसांबसदाशिवार्पणमस्तु ॥ गद्यं ॥ इतिकथांश्रुत्वासायंसंध्यांविधायमहोत्स





57

मिषार्धेनलंकादाहंकरिष्यति ॥ कृत्वारामस्यसाहाय्यंकीर्तिंपारंगमिष्यति ॥ १६
॥ अनेनसदृशःकश्चित्बलवान्नभविष्यति ॥ श्वःप्रभूपुजयित्वातमानयिष्येतवां
तिकं ॥ १७ ॥ ससर्वसागरंतीर्त्वासीताशुद्धिंकरिष्यति ॥ इत्यंजनावचःश्रुत्वारा
मसस्मितमैक्षत ॥ १८ ॥ राममाविस्मयंकार्षीर्मद्वाक्येनजगत्प्रभो ॥ अधुनैवम
हाबाहोकौतुकंदर्शयामिते ॥ १९ ॥ इत्युक्त्वात्वंजनारामंपश्यत्सुवनचारिषु ॥
अंगुष्ठतर्जन्यग्राभ्यांन्यपीड्यस्तनकंचुक ॥ २० ॥ ततःसप्तपयोधाराःसुश्रुवुःपृ
थिवीतले अंजनाचलजानुस्तुमध्येभग्नेपतद्वत्यधः ॥ २१ ॥ तेनब्रम्हगिरेर्जानुः
प्रभिन्नःसप्तधाभवत् ॥ हाहाकारोमहानासीद्देवानांतत्रपश्यनां ॥ २२ ॥ जगर्जगग
नंसर्वंब्रह्माद्रिःसहकंपत ॥ एतस्मिन्नंतरेवाणीब्रम्हाद्रेःसमजायत ॥ २३ ॥ सा
धुसाधुमहाभागसप्तलिंगान्यभूनिमे ॥ विहीतानित्वयाभद्रेममप्रीतिकराणिहि ॥
२४ ॥ पूर्वाणिपंचलिंगानिसप्तमान्यपराणिच ॥ एवंद्वादशलिंगानिभविष्यंतेम
माधुना ॥ २५ ॥ विलोकयंतियेभक्त्यातेषांमुक्तिर्नसंशयः ॥ राममराममहाबाहो

लिने। भृशं॥ १ ॥वेदशास्त्रार्थरहितोदीनोबहुकुटुंबकः॥कदाचिद्दैवयोगेनभार्यापुत्रसम
न्वितः ॥ २ ॥ कुतश्चिद्वाहनंलब्ध्वात्र्यंबकक्षेत्रमाययौ ॥ अत्रयात्रार्थिनोलोकाः
पुण्यंकुर्वंतिनिश्चयशः ॥ ३ ॥ अत्रैवोदरपूर्तिर्मेकुटुंबस्यभविष्यति ॥इतिबुध्यास्थि
तस्तत्रमासमात्रंसकर्षकः ॥ ४ ॥ मूर्खत्वान्मलिनत्वाच्चनालभत्तत्रकिंचन ॥ त
तःसदुःखितःस्वीयंग्रामंगंतुंमनोदधे ॥ ५ ॥ एतस्मिन्नंतरेतस्यवाहनंकुत्रचिद्गतं ॥
सभृष्टवाहनोविप्रः सभार्योतीवदुःखितः ॥ ६ ॥ किंकरोमिकगच्छामिवाहनरुग्
गतिःकथं ॥ इतस्ततोभ्रमन्नित्यंनालभद्वाहनंस्वकं ॥ ७ ॥ एवमष्टौदिनान्यास
न्वाहनंतस्यपश्यतः ॥ एकदाप्रातरुत्थायग्रामस्थंपृष्टवान्द्विजः ॥ ८ ॥ ब्रह्माद्रेः
परितःपश्यवाहानंतभविष्यति ॥ ग्रामस्थेनैवमुक्तस्तुपश्यामीतिमतिंदधौ॥ ९ ॥एक
दाप्रातरुत्थायशौचादिविधिपूर्वकं॥ स्नानंकृत्वाकुशावर्तेत्र्यंबकेशंप्रणम्यच ॥ १०
ब्रह्माद्रिंसव्यतःकृत्वापश्यन्पश्यन्ययौद्विजः॥ नृसिंहतीर्थनिकटेवाहनंप्राप्यहर्षि
तः ॥ ११ ॥ पश्चाद्गंतुंमतिंचक्रेतत्रापश्यत्कृषीवलं ॥ तस्मैमार्गेसपप्रच्छपश्चाद्ग

वपूर्वकंतांरात्रिंजागरेणनयेत् ॥ इतिद्वितीयदिनकृत्यं ॥ पुनस्तृतीयदिवसे ॥प्रातरु
त्थायरामतीर्थेस्नात्वासंध्यांविधायश्रीरामंप्रणम्यतदनुज्ञांसंप्राप्य ॥ मार्गेवाणगं
गादितीर्थेपुवंदनादिकृत्वाविमलनिर्मलतीर्थंगच्छेत् ॥ तत्रतीर्थेपूर्ववत् ॥ स्नानादि
कृत्वाक्षणंत्र्यंबकेशंहृदिध्यात्वाउपनिषत्पाठंकृत्वा शिवविष्णुअग्निचंद्रसूर्यगरुडश
क्तिगणेशत्रिपुरेश्वराऽघोरनृसिंहमृत्युंजयसरस्वतीदुर्गागोपालवराहामंत्रान्पठे
त् ॥अत्राप्यशक्तौ ॥ शैवानिनामानिपठेत् ॥ॐशिवाय० ॥ शंकराय० ॥ त्र्यंबके
श्वराय० ॥ इत्यादि ॥ ॐहरयेनमः ॥ विष्णवेनमः ॥ ॐनारायणायनमः ॥
इत्यादिचपठेत् ॥ ततोविमलंनत्वावैतरणींव्रजेत् ॥ तत्रस्नात्वापितॄन्संतर्प्यपूर्ववत
श्राद्धंकुर्वीत ॥ ब्राह्मणांश्चभोजयेत् ॥ तेभ्यःगोभूतिलहिरण्यवस्त्राश्वगजमहिषी
दास्यादियथाशक्तिदद्यात् ॥ तन्निष्क्रयीभूतंद्रव्यंवादद्यात् ॥ विप्रशेषान्नंस्वयंवाभुं
जीत ॥ ततोगौतमस्थानमागत्यतंनत्वातत्रनिशांपूर्ववन्नयेत् ॥ अथगौतमाश्रमकथा
श्रीशंवंदे ॥अत्राख्यानंपुरावृत्तंशृणुविस्मयकारकं ॥ब्राह्मणःकर्षकःकश्चित्दारिद्र्यो

सनंभेजेबहुदेवप्रपूजितः ॥ अर्धासनगतंविप्रंनसहेमेघवाहनः ॥ २३ ॥ ग
तिबहुतिथेकालेकदाचित्क्रोधमूर्छितः ॥ किमनेनकृतंपुण्यंइत्युवाचबृहस्पतिं ॥
२४ ॥ बृहस्पतिस्तुतत्श्रुत्वाज्ञानदृष्ट्याविलोक्यच ॥ शक्रायकथयामासगुह्य
मेतद्विशेषतः ॥ २५ ॥ गुरुरु० ॥ प्रदक्षिणाकृतायेनब्रह्माद्रेःपूर्वजन्मनि ॥ तेनपु
ण्यप्रभावेनभुक्ताभोगान्यथेप्सितान् ॥ २६ ॥ इदानींस्वर्गमासाद्यतवार्धासन
मागतः ॥ प्रदक्षिणायामाहात्म्यंकस्यापिविदितंनहि ॥ २७ ॥ अस्यांनक्रटमा
णायांतवराज्यंगमिष्यति ॥ सांगाचेद्धिःकृतासाचशक्रराज्यप्रदायिनी ॥ २८ ॥
इतिश्रुत्वागुरुवचःशक्रोतीवक्रुधंययौ ॥ गजान्व्याघ्रान्मृगान्नागान्नादिदेशस्व
यंहरिः ॥ २९ ॥ ब्राम्हाद्रेःपरितोमार्गेयेगमिष्यंतिमानवाः ॥ प्रदक्षिणार्थिनःस
र्वेहंतव्याइतिनिश्चितं ॥ ३० ॥ एवमुक्तासुरेंद्रेणतथत्युक्त्वाचतेययुः ॥ ब्रह्माद्रिनैं
ऋतेभागेवर्ततेगहनंवनं ॥ ३१ ॥ प्रदक्षिणार्थिनोजन्तुस्तत्र स्थित्वानिरंतरं ॥
ततःप्रभृतितंमार्गंतत्यजुर्मानवानृप ॥ ३२ ॥ तंदृष्ट्वाञ्यंबकः प्राहगौतमंप्रतिभूप

पुरतोपिवा ॥ १२ ॥ कपीवलस्तुतंप्राहपुरस्ताद्देवसान्निधिः ॥ कपीवलस्तुमार्गेण
त्र्यंबकंप्राप्तवान्द्विजः ॥ १३ ॥ एतस्मिन्नंतरेतत्रग्रामेराज्ञाश्रुतंनृप ॥ कर्षकोग्रा
ममुत्सृज्यदारिद्र्येणप्रपीडितः ॥१४॥ स्वकुटुंबंसमादायप्रयातस्त्र्यंबकंप्रति ॥ रा
जातिदुःखितःप्राहधिक्मांधिक्ममजीवितं ॥ १५ ॥ अवंतीवासिनःपूर्वराजानो
येवभूविरे ॥ तेषांकुलकुठारोहंयस्यमेचेदृशीगतिः ॥ १६ ॥ यस्यग्रामंसमुत्सृज्य
ब्राह्मणोयातिचान्यतः ॥ आनयंतुद्विजःशीघ्रंसकुटुंबंममाज्ञया ॥ १७ ॥
॥ तस्मैग्रामप्रदास्यामिबहुसस्यसमान्वितं ॥ इत्युक्त्वाप्रेषयत्दूतंसदूतःपथि
मीलितः ॥ १८ ॥ कर्षकःसहतेनैवराजानंद्रष्टुमाययौ ॥ राज्ञादर्शनमात्रेणसत्कृ
तःसद्विजोत्तमः ॥ १९ ॥ ग्राममेकंददौतस्मैबहुसस्यसमन्वितं ॥ वत्रधेगोधनं
तस्यगृहंतेनमहत्कृतं ॥ २० ॥ वेदाश्चपठितास्तेनसांगाः शास्त्रसमन्विताः ॥
इष्टंचबहुभिर्यज्ञैर्दत्ताश्चबहुदक्षिणाः ॥ २१ ॥ ततोबहुगतेकालेकर्षकोमरणं
गतः ॥ दिव्यंविमानमारुह्यशक्रस्यसमतामियात् ॥ २२ ॥ इंद्रस्यार्धा

 

मंविसृज्यंसायुज्यतांतिसहसाव्रजंति ॥ नंदिके० ॥ इत्युक्तेदेवदेवेनतथाचक्रुर्गणा
नृप ॥ इंद्रःसंतोषमापन्नोयथास्थानंययौततः ॥ ४३ ॥ इतितेकथितंसर्वंकर्पका
ख्यानमुत्तमं ॥ यश्शृणोतिनरोभक्त्यासोपिपापैःप्रमुच्यते ॥ ४४ ॥ इतिश्रीगोदा
यात्राविवेकादर्शेप्रदक्षिणाविधौतृतीयदिनकृत्यं ॥ ३ ॥ अथचतुर्थदिवसे ॥ प्रातः
पिनाकिनंदेवंस्मृत्वा निलगंगांच–पश्चिमवाहिनीति–प्रसिद्धांतत्रगत्वा स्नात्वा
पितृतर्पणंच कृत्वाशिवगणान्भैरवांश्चनमेत् ॥तद्यथा॥ ॐमाहाकालायनमः ॥
ॐवीरभद्रायनमः ॥ ॐगणेश्वरायनमः ॥ ॐचंडिनेनमः ॥ ॐचंडीश्वरायनमः
॥ ॐभृंगिरिटयेनमः ॥ ॐस्कंदायनमः ॥ ॐनंदिनेनमः ॥ ॐघंटाकर्णायनमः
॥ ॐमहाबाहवेनमः ॥ ॐधूम्रकेतवेनमः ॥ ॐवृकाननायनमः ॥ ॐपिंगाक्षाय
नमः ॥ ॐसिंहनादायनमः ॥ॐमहाकाळायनमः॥ इतिभैरवान्नत्वा श्रीत्र्यंब
केश्वरं आदिस्थानं प्रणमेत् ॥ ततःधवलगंगांशालिपद्ममहानागश्रीनृसिंहादिती
र्थाधिदेवतान्नत्वा ॥ अग्रेसीमालयंसिद्धिविनायकंगत्वा तं समर्चयेत् ॥ ततोवि



60

तं ॥ अत्रत्वमाश्रमंकृत्वातिष्टभार्यासमन्वितः ॥ ३३ ॥ तवप्रभावात्सिंहाद्या
निर्वैरास्युर्महीतले ॥ गौतमोपितथाचक्रेयथोक्तंत्र्यंबकेनच ॥ ३४ ॥ ततःप्रभृति
तत्तीर्थंगौतमंमुनयोविदुः ॥ अद्यापिश्रूयतेतत्रक्वचिद्वेदध्वनिर्नृप ॥ ३५ ॥ गौतमः
ससुतःशिष्यैः पठद्भिर्वेदमंतिके ॥ उच्चारिताश्चसिंहाद्यानिर्वैरास्तत्रआसते
॥ ३६ ॥ गौतमेतुस्थितेतत्रनिर्वैरसिंहराक्षसे ॥ लोकाःप्रदक्षिणांचक्रुर्ब्रह्माद्रेर्नृप
सत्तम ॥ ३७ ॥ प्रदक्षिणायाःपुण्येनदिव्यदेहाश्चमानवाः ॥ दिव्यंविमानमारु
ह्यशक्रलोकमथाव्रजन् ॥ ३८ ॥ इंद्रस्तुदुःखितोभूत्वाकैलासमगमत्ततः ॥ स्व
कीयप्रकृतिंतस्मैकथयामासचादरात् ॥ ३९ ॥ इंद्रस्यवचनंश्रुत्वाशंकरःकृपयान्वि
तः ॥ स्वगणांस्तुसमाहूयवचनंचेदमब्रवीत् ॥ ४० ॥ शंकरउ० ॥ रेरेगणाःसर्वइमे
भवंतःश्रृण्वंतुकुर्वंतुवचोमदीयं ॥ येमानवाःब्रम्हगिरेःप्रदक्षिणांसकृत्करिष्यंति
विमानरूढाः ॥ ४१ ॥ मत्तुल्यरूपाःपरमादरेणस्थानीयतांलोकमिमंमदीयं ॥ ब
र्हीःकरिष्यंतिचयेप्रदक्षिणातेषांनाचिंताभवतोममापि ॥ ४२ ॥ यतोहितेदेहमि

तत्रत्याःसर्वदेवताःनत्वागृहंगत्वाश्राद्धं ब्राम्हणभोजनंचविधायस्वयंमौनेनभुंजी
त ॥ इष्टैःपरिवारेणचसह ॥ इतिपंचमदिनकृत्यं ॥ ५ ॥ ॥ छ ॥ ॥ ॥
अथत्रिदिनविधिः ॥ प्रथमेन्हिपूर्वमार्गेणवैतरणींगत्वातत्रएकरात्रिंस्थित्वा ॥ प्रा
तःस्नात्वासंध्यादिविधायविल्वतीर्थंगत्वाबिल्वकेशंसंपूज्यतत्रनिशांजागरेणनयेत्
॥ त्रितीयेन्हिप्रातःतत्रस्नात्वाश्रीत्र्यंबकेशमेत्यमहापूजयाअभ्यर्चयेत्॥ ततःकुशा
वर्तंगत्वातदभिवंद्यतदुदकेनमार्जनंविधायगृहंगच्छेत् ॥ अत्रपक्षेपंचाहसाध्येप्रद
क्षिणाविधौयत्रयत्रश्राद्धमुक्तंतत्रतत्रआमेनहेम्नावाश्राद्धानिकार्याणि ॥ इतित्रिदि
नसाध्यःप्रदक्षिणाविधि ॥ ३ ॥ अथएकाहपक्षप्रदक्षिणाविधिः ॥ १ ॥ छ ॥
प्रातःकुशावर्तेस्नात्वातत्प्रदक्षिणीकृत्यवाहिनींगोदांस्वदक्षिणतः कृत्वाश्रीत्र्यंबक
शंसंपूज्यहनूमंतंप्रणम्यप्रयागंगत्वातदभिवंद्यप्रदक्षिणीकृत्य ॥ रामेशंपरिक्रम्यत
त्तीर्थस्नानंकृत्वाततोविमलतीर्थेस्नात्वा ॥ वैतरणींगत्वातत्रस्नात्वासमस्तपितॄन्
संतर्प्यतत्रहिरण्यश्राद्धंकृत्वासक्तुपिंडानदत्वाततोगौतमाश्रमंगच्छेत् ॥ गौतमंप्रण

61

ल्वतीर्थंव्रजेत्॥ तत्तीर्थदेवनांप्रणम्यतत्र स्नात्वा तपर्णकृत्वा विश्वेशंविल्वकेशंसपूं
ज्य ॥ पूर्ववत्श्राद्धंविधायब्राह्मणान्संतर्प्यंयथाशक्तिदानानिकुर्यात् ॥ दीनांधपं
ग्वादीन्अन्नादिना संतोष्य तत्रतांरात्रींअध्यात्मविचारेणजागरेणचनयेत् ॥ ४ ॥
अथपंचमदिनकृत्यं ॥ प्रातः ॥ तत्रतीर्थेस्नात्वाश्रीविल्वकेशंनत्वा ॥ तत्समीपगां
नीलांबांचंडींनत्वासपरिपारयुतांसंपूज्यश्रीनीलकंठेश्वरंश्रीपादपादुकांप्रणम्यमुकुं
दतीर्थंसिद्धाश्रमंव्रजेत् ॥ तत्रस्नात्वामुकुंदेशंसंपूज्य ॥ पूर्वहनूमंतमेत्यकृतांप्रदक्षि
णायात्रांतस्मैनिवेदयेत् ॥ निवेदनमंत्रस्तु॥श्लो०॥ यात्रेयंविहितादेवतवशक्त्याम
याविभो ॥ त्वंसर्वकर्मणांसाक्षीप्राणनाथनमोस्तुते ॥ १ ॥ इतिनिवेद्यश्रीत्र्यंब
केशमंदिरंपूर्वद्वारेणगच्छेत् ॥ तंत्र्यंबकेशंसंपूज्यकृतांप्रदक्षिणांनिवेदयेत् ॥ निवे
दनमंत्रस्तु ॥ श्लोक ॥ प्रदक्षिणामयादेवविहितातवतुष्टये ॥ प्रीतोद्यभवमेकामा
नूपूरयाशुवरप्रद ॥ १ ॥ इतिप्रार्थ्यतद्दक्षिणद्वारेण श्रीत्रिसंध्येश्वरंत्रिपदागायत्रींप्र
णम्यपश्चिमद्वारेणश्रीकुशावर्ततीर्थमागत्यतत्प्रदक्षिणांकृत्वातदुदकेनमार्जनंकृत्वा

सत्कृत्प्रदक्षिणांकृत्वामुच्यतेसर्वपातकैः ॥पादंपादेनसंयोज्यप्रकुर्वीतप्रदक्षिणां ॥ अ०
८ ॥ यत्रश्रांतोभवेतत्रचिन्हंकृत्वागृहंव्रजेत् ॥ पंगुवत्प्रचलंगच्छेत्प्रकुर्वीतप्रदक्षि ॥११॥
णां ॥ ९ ॥ श्रांतश्चिन्हंप्रकुर्वीतसव्येनस्वगृहंव्रजेत् ॥ विपरीतोव्रजन्मार्गेवि
परीतप्रदक्षिणा ॥ १० ॥ एवंचतुर्विधाप्रोक्तात्र्यंबकाद्रेःप्रदक्षिणाः ॥ यःकरोतिन
रोराजन्ससाक्षात्र्यंबकोभवेत् ॥ ११ ॥ राजन्ब्रम्हगिरेपरिक्रमफलंवक्तुंनधाता
क्षमोनोविष्णुर्नचशंकरोनचसहस्रास्योपिशेषाभिधः ॥ अस्माकंगणनैवकात्रभग
वत्पादाब्जधूल्यात्मनांकिंचिन्मात्रपदंपरिक्रमफलंप्रोक्तंतवाग्रेमया ॥ १२ ॥ इति
श्रीगोदायात्राविवेकाऽदर्शेब्रम्हगिरिप्रदक्षिणाविधिःएकादशप्रकरणं ॥ ११ ॥
श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ छ ॥ ॥ ॥ ॥
श्रीहेरंबायनमः ॥ अथसिंहस्थमहिमाविवरणम् ॥ पुरासर्वाणितीर्थानिजनानां
पापसंचयात् ॥ मलिनत्वमथासाद्यशंकरंशरणंययुः ॥ १ ॥ महापातकनाशार्थं
शक्तिर्नोनास्तिशंकर ॥ श्रीशंकरउवाच ॥ मूलस्थानंसमायांतुसिंहस्थेचबृहस्प ॥५७॥

म्यपश्चिमवाहिनींगत्वातत्रस्नात्वातर्पणंविधाय पुरोबिल्वेशंप्रणम्यतत्तीर्थस्नानं त्र्यंबकालयेपूर्वद्वारेणागत्यदेवंसंपूज्यततोकुशावर्तमेत्यतीर्थोदकेनमार्जनंकृत्वातत्र दक्षिणांचकृत्वागृहमागत्य ॥ श्राद्धंब्राम्हणसंतर्पणंविधायस्वयंभुंजीत ॥ इत्येकाह पक्षविधिः ॥ १ ॥ ॥ तेषांमध्येमुख्यमुख्यतिर्थानिकथ्यंते ॥

॥ श्लोकाः ॥ तिस्रकोटयर्धकोटिश्चतीर्थानिभूवनत्रये ॥ ब्रम्हाद्रेःपरितोमार्गेता निसर्वाणिसंतिहि ॥ १ ॥ कृतादौसर्वतीर्थानिस्फुटान्यासन्नरोत्तम ॥ मार्गेप्रति पदंतीर्थंविज्ञेयंब्रम्हभूतयः ॥ २ ॥ प्राप्तेकलियुगेघोरेसर्वाण्यंतर्हितानिच ॥ का निचित्तेपुमुख्यानिगौतमप्रार्थितानिच ॥ ३ ॥ प्रयागंनागतीर्थंचरामतीर्थंततःपरं ॥ विमलंनिर्मलंचैवगंगावैतरणीतथा ॥ ४ ॥ गौतमाश्रममारुह्यततःपश्चिमवा हिनी ॥ सापिसाक्षात्सरिच्छ्रेष्ठागंगैवेतिनसंशयः ॥ ५ ॥ ततस्तच्छालितीर्थंचनृ सिंहाख्यंततेविदुः ॥ महागणपतेस्तीर्थमेवमेकादशप्रभो ॥ ६ ॥ कथितानि प्रधानानिरुद्रप्रीतिकराणिच ॥ तेषामुत्पत्तिमाहात्म्यंकथयामानमानघ ॥ ७ ॥

भींगंगांतीर्थान्यन्यानिसेवितुं ॥ येयांतिमूढास्तेयांतिनरकंसिंहगेगुरौ ॥ ११ ॥
अन्यच्च ॥ सर्वदागौतमीपुण्यासिंहस्थेचविशेषतः ॥ आद्यासागौतमीगंगाद्वितीयाजाह्नवीमता ॥ १२॥ सर्वतीर्थफलंस्नानात् गौतम्यांसिंहगेगुरौ ॥ कन्यागतेतुकृष्णायांनतुततीर्थवासिनां ॥ १३ ॥ ब्रह्मांडे ॥ षष्टिवर्षसहस्राणिभागीरथ्यवगाहने ॥ सकृत्गोदावरीस्नानंसिंहस्थेचबृहस्पतौ ॥ १४ ॥ इंद्राद्यादेवताःसर्वेरंभाद्याप्सरसोगणाः ॥ पुष्कराद्यानितीर्थानिगंगाद्यासरितस्तथा ॥ १५ ॥ विश्वेश्वरादिलिंगानिमंदराद्यामहीधराः॥ ब्रह्माद्यादेवताःसर्वेकश्यपाद्यामहर्षयः ॥
॥ १६ ॥ गोदावरीसमागत्यवर्षंतिष्टंतिसिंहगे ॥ अतःसिंहगतोजीवःसर्वपापक्षयंकरः ॥ १७ ॥ अतएव श्रीत्र्यंबकक्षेत्रे सिंहबृहस्पतिपर्वआरंभनिमित्त कुशावर्तस्नाने श्रीमत्कपिलाश्रमादि मठस्थाने ध्वजारोपणं ॥
यतिमहापुरुषैःक्रियतेतत्र ॥ किंप्रमाणंध्वजापर्वइति ॥ सिंहेगुरूनिमित्तकगोदास्नानस्यपर्वाणउत्सवे ॥ ध्वजाइतिध्वजापर्व राजदंतादित्वात्परनिबंधका





63

तौ ॥ २ ॥ वर्षमेकंचतिष्ठंतुपुनर्यांतुनिजाश्रमं ॥ अत : सर्वेषुकालेषुसिंहस्थोत्र
विशिष्यते ॥ ३ ॥ तथैवत्रिपुरपीडाश्रितेदेवान्प्रतिशंकरोक्ति : ॥ गोदावरींस
मायांतुमूलस्थानेममाज्ञया ॥ सिंहस्थेदेहधारिण्योदेवतास्तत्रयांतिहि ॥ ४ ॥
तत्रनामकुशावर्तेनतुजनस्थाने ॥ तथाचश्रीरामंप्रतिकाश्यपोक्तिः ॥ सिंहस्थिते
सुरगुरौदुर्लभंगौतमीजलम् ॥ यत्रकुत्रापिराजेंद्रकुशावर्तेविशेषतः ॥ ५ ॥ यस्त
त्रकुरुतेश्राद्धंतर्पणंब्रह्मभोजनम् ॥ कपिलादानसंयुक्तं कुशावर्तेविशेषतः ॥ ६ ॥
तेनमुक्तिमवाप्नोतिनात्रकार्याविचारणा ॥ अन्यच्च ॥ सिंहस्थितेसुरगुरौत्र्यंबकंय
स्तुपश्यति ॥ नापुत्रीनाधनीरोगीसप्तजन्मसुजायते ॥ ७ ॥ नजायतइत्यर्थः ॥
स्कंदपुराणे ॥ गोदायांयत्फलंप्रोक्तंसंगमेद्विगुणंभवेत् ॥ चतुर्गुणंतुसिंहस्थेत्य
तिचारेतुषड्गुणं ॥ ८ ॥ वक्रेचाष्टगुणंप्रोक्तंस्नानदानजपादिषु ॥ उत्पत्तौकोटिगुणितं
सर्वंतच्चाक्षयंभवेत् ॥ ९ ॥ सर्वफलापेक्षयागोदाउत्पत्तिस्थाने स्नानदानादिफ
लानां कोटिगुणितत्वेनसर्वोत्तमत्वंसिद्धं ॥ १० ॥ ब्रह्मपुराणेतु ॥ विहायगौत

धर्मजातंक्रियतेतत्समीचीनमेवेत्यवेहि ॥ २५ ॥ अतएवसिंहस्थोत्रविशिष्यते ॥
अथसिंहस्थस्नानफलम्॥ धन्याहोगोतमीगोदाधन्यंतत्स्नानमुत्तमं ॥ तत्स्नानंये
प्रकुर्वंतितेतुधन्यतमास्मृताः ॥ २६ ॥ यस्मिन्दिनेगुरुःपुत्रसिंहराशिंगतोभवेत्
तस्मिन्स्तुगौतमीस्नानंकोटिजन्माघनाशनम् ॥ २७ ॥ सेंद्राःसुरगणाःसर्वेरुद्रा
दित्यामरुद्गणाः ॥ स्नातुंसर्वेगमिष्यंतिसिंहस्थेचबृहस्पतौ ॥ २८ ॥ पृथिव्यां
यानितीर्थानिसरांसिसरितस्तथा ॥ गौतमीस्नातुमायांतिसिंहस्थेचबृहस्पतौ ॥
॥ २९ ॥ भागीरथ्यांकुरुक्षेत्रेप्रभासेसूर्यपर्वणि ॥ तद्गौतम्यासकृत्स्नानंसिंहस्थे
चबृहस्पतौ ॥ ३० ॥कालनिर्णयेतु॥सिंहराशिंगतोयस्मिन्दिनेसुरगुरुर्भवेत् ॥ त
स्मिन्स्तुगौतमीस्नानंकोटिजन्माऽघनाशनम् ॥ ३१ ॥ मदनपारिजातेशंखः
॥अलक्ष्मींकालकर्णींचदुःस्वप्नंदुर्विचिंतितम् ॥ याम्यांहियातनादुःखंप्रातःस्नायी
नपश्यति ॥३२स्कंद०॥ स्नानस्यमहिमानंतुश्रुत्वासिंहगतेगुरौ ॥ दानंकिंदेयमत्रा
पियदनंतफलंभवेत्॥३३॥इतिगोदा० सिंहस्थामाहात्म्येस्नानफलं॥अथदानानि



64

रा:निपात: समासश्च॥ अतएव ध्वजापर्वेतिस्त्रीत्वं॥ केतनंध्वजमस्त्रियामितिअ
मरसिंहस्तुभ्रांत: पूर्वक्लीबंसर्वंदितिमेदिन्यादौ ॥ १९ ॥ भागवतेदशमेचमहउ
त्सव: गोदास्नानोत्सव: ॥ इतिनिबंधकारा: ॥तत्रभविष्यपुराणेदेवीपुराणेअग्नि
पुराणेकल्पतरौमुहूर्तकमलाकरादौ ॥ २० ॥ वंशज: शालजोदीर्घ: सध्वज:सर्व
कामद: ॥ इतिउक्तं ॥ अथव्रतार्केध्वजारोपणविधि: ॥ प्रासादेदेवताऽगारेयज्ञे
तीर्थेवनेतथा ॥ वापीकूपतडागेषुनद्यांवापर्वतेतथा ॥ २१ ॥ राजद्वारसमीपेच
ध्वजापापप्रणाशिनी ॥ स्नानादिकास्यपुण्येषुध्वजारोपणमुच्यते ॥ २२ ॥
षोडशोद्वादशोवापिउच्छ्रायोदंडउच्यते ॥ रक्तवस्त्रादिकंचापि तदुक्तंज्ञायतेबुधै:
॥ २३ ॥ अतएवकुंतपूजारक्तावस्त्रादिघंटास्वस्तिवाचनवेदघोषवाद्यगीतादिकं
चतत्रोक्तंततोज्ञेयं॥ २४ ॥ एतेनत्र्यंबकक्षेत्रेगोदावरीयकुशावर्ततीर्थराजस्नाना
द्युत्सवेसिंहगुरुनिमित्तकेअत्रदेशांतरादागत्यसंहत्यागुरुशिष्यपरंपरयासंमीलितै:
गिरिपुरीभारथीत्यादिदशनामकयतीश्वरमहापुरुषादिभि:ध्वजारोपणादिकुंतपूजा

सर्वपापहरंपरं ॥ ८ ॥ ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं ॥ एकत्रमंत्रास्तिष्ठं
तिहविरेकत्रतिष्ठति ॥ ९ ॥ गावोलक्ष्म्याःसदामूलंगोषुमंत्रनविद्यते ॥ स्वाहा
स्वधावषट्कारौगोषुनित्यंप्रतिष्ठितौ ॥ १० ॥ अग्न्यागाराणिविप्राणांदेवताय
तनानिच ॥ पूज्यंतेशकृतायासांकिंपवित्रमतःपरं ॥ ११ ॥ गावोयज्ञस्यनेत्रंवैगा
वोयज्ञस्यवैमुखं ॥ अमृतंह्यक्षयंदिव्यंक्षीरंगावोवहंतिच ॥ १२ ॥ योगंतुंवांछि
तिस्वर्गंगोपूजांसकरोतिवै ॥ त्र्यंबकक्षेत्रयात्रायांसुभक्त्यायवसादिना ॥ १३ ॥
आदित्यदुहितागौर्हिपृथ्वीयंपरिकीर्तिता ॥ श्रेयोर्थेसर्वलोकानामुत्पन्नाक्रतुसिद्धये
॥ १४ ॥ गोभ्योयज्ञाःप्रवर्तंतेगोभ्योयज्ञाःसमुत्थिताः ॥ गोभ्योवेदाःसमुत्तीर्णाः
65
सषडंगपदक्रमाः ॥ १५ ॥ तृणानिखादंतिवसंत्यरण्येपिबंतितोयान्यपरिग्रहाणि
॥ दुह्यंतिवाह्यंतिपुनंतिविश्वंगवांरसैर्जीवतिजीवलोकः ॥ १६ ॥ स्पृष्टाश्चगावः
शमयंतिपापंदत्ताश्चगावस्त्रिदिवंनयंति ॥संरक्षिताश्चोपनयंतिविश्वंगोभिर्नतुल्यंध ॥६०॥
नमस्तिकिंचित् ॥ १७ ॥ सायत्रचाश्वातिददातिलक्ष्मींपापापहामित्रविवर्धना

श्रीशिवउवाच ॥ शृणुपुत्रप्रवक्ष्यामि ॥ गुह्यमेतत्प्रसंगतः ॥ यस्याऽचरणमात्रे
णसर्वेषांगोशतंफलं ॥ ३४ ॥ गोदानंतुअशक्तेनकृतेनंतफलप्रदं ॥ सर्वेषामेवदाना
नांफलंतस्यनदुर्लभं ॥ अथगोपूजनविधिः ॥ श्रीविष्णुलक्ष्मीसंवादे ॥ ॥ ७ ॥
श्रीगणेशायनमः ॥ श्रीरुवाच ॥ भगवन्श्रोतुमिच्छामिगवांपूजनमुत्तमं ॥ कथमे
तापवित्रागौःकथंपूज्याचकिंफलं ॥ १ ॥ तत्सर्वंब्रूहिमेदेवत्र्यंबकेश्वरतुष्टये ॥ वि
ष्णुरुवाच ॥ शृणुदेविप्रवक्ष्यामिप्रथमंपूजनंगवां ॥ २ ॥ गवामंगेषुतिष्ठंतिभुव
नानिचतुर्दश ॥ गावःपवित्रंमतुलंगावोमंगलमुच्यते ॥ ३ ॥ गावोभूमिश्चभूतानि
स्थावराणिचराणिच ॥ नीराजयतियोगानिगवांपुच्छेनभाग्यवान् ॥ ४ ॥ गोमयंय
मुनासाक्षात् गोमूत्रंनर्मदाशुभा ॥ क्षीरंगंगासमंयासांकिंपवित्रमतःपरं ॥ ५ ॥
वेदाःशास्त्राणिधर्माश्चपुराणानीतिहासकं ॥ आब्रह्मस्तंभपर्यंतंगोषुतिष्ठंतिनित्य
शः ॥ ६ ॥ गोभिस्तुल्यंनपश्यामिधनंकिंचिदिहोच्यते ॥ कीर्तनंश्रवणंदानंद
र्शनंचापिसुंदरि ॥ ७ ॥ स्पर्शनंपूजनंचैवमार्जनंचप्रदक्षिणां ॥ गवांप्रपश्यतेदेवि

सतदातारयेज्जंतूनकुलानामयुतैःशतैः ॥ २८ ॥ अपात्रेसातुगौर्दत्तादातारंनरकंनं
येत् ॥ कुलैकविंशतियुतंगृहीतारंतुपातयेत् ॥ २९ ॥ नापात्रेविदुषादेयाआत्मना
शुभमिच्छता ॥ गीताधेनुर्हिरण्यंचत्र्यंबकेस्वगुरुंविना ॥ ३० ॥ बहुक्षीरांचयोगां
वैब्राह्मणायोपदापयेत् ॥ उत्तारयेत्सचात्मानंसप्तसप्तकुलानिच ॥ ३१ ॥ आदौ
संपूजयेत्धेनुंप्रार्थयेच्चततःपरं ॥ संपूज्यविधिवत्विप्रंततोदानंसदक्षिणं ॥ ३२ ॥
मयाचब्राह्मणैःसार्द्धंशिवेनचमहर्षिभिः ॥ विचार्यगोगुणान्नित्यंप्रार्थनेयंकृतापुरा
॥ ३३ ॥ कृत्वाप्रदक्षिणामादौगृहीत्वाश्रीफलंशुभं ॥ भक्त्यापादौनमस्कृत्यततः
पूजांसमारभेत् ॥ ३४ ॥ अथगोप्रार्थनामंत्रः ॥ यालक्ष्मीःसर्वभूतेषुयाचदेवेव्य
वस्थिता ॥ धेनुरुपेणसादेवीममपापंव्यपोहतु ॥ ३५ ॥ विष्णोर्वक्षसियालक्ष्मीः
स्वाहाचैवविभावसोः ॥ स्वधयापितृमुख्यानांसाधेनुर्वरदास्तुमे ॥ ३६ ॥ गावो
मेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवामध्येवसाम्यहं ॥ ३७ ॥
पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः॥



66

च ॥ संएवनित्यंपरिभुज्यंतेचगोभिर्नराणामिहासिद्धतंत्रं ॥ १८ ॥ तृणानिशुष्काणि
निवनेचरित्वापीत्वासुतोयान्यमृतंस्रवंति ॥ यज्ञोमयाद्याश्चपुनंतिलोकान्गोभि
नंतुल्यंभुवनेषुदेवि ॥ १९ ॥ पूजनंसंप्रवक्ष्यामिगवामघनिवारणम् ॥दानंदेयंवि
शेषेणस्वर्गदंसुखदंनृणां ॥ २० ॥ सुशीलांलक्षणवतींयुवतींवत्ससंयुतां ॥ बहुदु
ग्धवतींस्निग्धांधेनुंदद्याद्विचक्षणः ॥ २१ ॥ नकृशांमृतवत्सांवावंध्यारोगान्वितां
तथा ॥ नचव्यंगामतिश्रांतांगांदद्यात्ब्राह्मणायवै ॥ २२ ॥ योदद्यान्नोपयुक्तार्थां
जीर्णांधेनुंचानिष्फलां ॥ तमसंप्रविशेद्दाताद्विजंक्लेशेनयोजयेत् ॥ २३ ॥ नैकशृं
गांचलत्भृंगांस्फुटिताक्षींचलत्खुरां ॥ नदद्यात्त्रिस्तनींचैवशुभ्रामेवचदापयेत् ॥
२४ ॥ होमार्थमग्निहोत्रस्ययोगांदद्याद्गुणान्वितां ॥ सुरत्नपूर्णापृथिवीतेनदत्तान
संशयः ॥ २५ ॥ गौरेकस्यैवदातव्याश्रोत्रियस्यविशेषतः ॥ साहितारयतेपूर्वान्
सप्तसप्ततिसप्तच ॥ २६ ॥ सागौर्न्यायार्जितादत्ताकृत्स्नंसंतारयेत्कुलं ॥ सुपात्रा
यार्थिनेपूजितांदक्षिणान्वितां ॥ २७ ॥ विधिवत्तुयदादत्तापात्रेधेनुःसदक्षिणा ॥

आदित्यारश्मयोर्वालेपिंडीभूताव्यवस्थिताः ॥ त्रयस्त्रिंशत्तुदेवानांकोट्योरोमसुसं
स्थिताः ॥४८॥उदरेपृथिवीदेवीसशैलवनकानना ॥चत्वारःसागराःपूर्णागवांयेतु
पयोधराः ॥ ४९ ॥ एभिर्मंत्रैस्तुविधिवत्पूजयेत्परयाधिया ॥ हेमशृंगींरौप्यखु
रींताम्रपृष्ठसुशोभितां ॥ ५० ॥ कांस्योपदोहनांकंठेघंटाद्यैरुपशोभितां ॥ रक्तव
स्त्रेणसंवीतांमाल्यैःकनकशोभितां ॥ ५१ ॥ ब्राह्मणंश्रुतिसंपन्नंकुलीनंधर्मवादि
नं ॥ पूजयेत्स्वगुरुंभक्त्याशांतंदांतमलोलुपं ॥ ५२ ॥ अंगुलीयकवस्त्राद्यैःपूज
यित्वाप्रदापयेत् ॥ अनेनैवतुमंत्रेणविप्रहस्तजलंक्षिपेत् ॥ ५३ ॥ अथदानमंत्रः
॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवीप्रीयतामनया
गवा ॥ ५४ ॥ दक्षिणांचततोदद्यात्सुवर्णंशक्तिमात्रतः ॥ अनुव्रज्यततोधेनुंब्रा
ह्मणेनसमन्वितः ॥ ५५ ॥ अनेनविधिनाधेनुंयोविप्रायप्रयच्छति ॥ सर्वकामस
मृद्धात्मरुद्रलोकेमहीयते ॥ ५६ ॥ सर्वेषामपिपापानांज्ञातानामविजानतां ॥
प्रायश्चित्तमिदंप्रोक्तंऋषिभिस्तत्वदर्शिभिः ॥ ५७ ॥ ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चा

॥ ३८ ॥ याधेनुःकश्यपस्यासीदत्रेर्वागोतमस्यच ॥ सास्तुकामफलादेवी
इहलोकेपरत्रच ॥ ३९ ॥ याधेनुर्जमदग्नेश्चवसिष्ठस्यचयास्मृता ॥ विश्वामि
त्रस्ययाधेनुःसाधेनुर्वरदास्तुमे ॥ ४० ॥ शृंगमूलेगवांनित्यंब्रम्हाविष्णुस
माश्रितौ ॥ शृंगाग्रेसर्वतिर्थानिस्थावराणिचराणिच ॥ ४१ ॥ शिरोमध्येमहा
देवःसर्वभूतमयस्थितः ॥ ललाटाग्रेस्थितादेवीनासावंशेचषण्मुखः ॥ ४२ ॥
॥ कंबलाश्वतरौनागौनासावंशेसमास्थितौ ॥ कर्णयोरश्विनौचैवचक्षुषोः
शशिभास्करौ ॥ ४३ ॥ दंतोशिवायवःसर्वेजिव्हायांवरुणस्थितः ॥ सर
स्वतीचहुंकारेयमयक्षौचगंडयोः ॥ ४४ ॥ संध्याद्वयंतथोष्टाभ्यांग्रीवायामिन्द्र
संस्थितः ॥ रक्षांसिकुक्षिदेशेतुसाध्याश्चारेसिसंस्थिताः ॥ ४५ ॥
॥ चतुष्पात्सकलोधर्मास्वजंघासुसंस्थितः ॥ खुरमध्येतुगंधर्वाःखुराग्रे
षुचपर्वताः ॥ ४६ ॥ खुराणांपश्चिमेभागेगणाह्यप्सरसांस्थिताः ॥ रुद्राश्चैकाद
शपृष्ठेवसवःसर्वसंधिषु ॥ ४७ ॥ श्रोणीतटस्थाःपितरःसोमोलांगूलसंस्थितः ॥

दानप्र० यस्यांतिथौमृगेंद्रेणयुक्तांदेवगुरुर्भवेत् ॥ तस्यामेवप्रकर्त्तव्यंघृतकुंभप्रदा
पनं ॥ १ ॥ घटिकादशमध्येतुदानंदेयंप्रयत्नतः ॥ अर्घ्याद्यैरभिपूज्याथब्राह्मणं
वेदवित्तमं ॥ २ ॥ अलंकारैश्चवस्त्राद्यैर्यथाशक्त्यासुपूजयेत् ॥ अनेनैवचमंत्रेणदा
नमेतत्प्रकीर्तितं ॥ ३ ॥ हिरण्यपुत्तिकायुक्तंरक्तवस्त्रंसदक्षिणं ॥ गोशत
स्यप्रतिनिधिंघृतकुंभंददाम्यहं ॥ ४ ॥ घृतकुंभस्यदानंयोभक्तिश्रद्धासमन्वितः
॥ करोतिसिंहगेजीवेसमुक्तोनात्रसंशयः ॥ ५ ॥ गोदावर्यांपुण्यदायांसिंहस्थेच
बृहस्पतौ ॥ घृतकुंभसमंदानंनभूतंनभविष्यति ॥ ६ ॥ अथपुस्तकदानं ॥ स्वण
सिंहासनस्थंचगोदामाहात्म्यपुस्तकम् ॥ ब्राह्मणायप्रदातव्यंविशेषात्सिंहगेगुरौ
॥ १ ॥ तद्दानफलमाहात्म्यंनालंवक्तुंचतुर्मुखः ॥ यंयंकामयतेकामंतंतंप्राप्नोति
मानवः ॥ २ ॥ इहलोकेसुखंतस्यपुत्रपौत्रसमन्वितं ॥ अंतेविष्णोश्चसारूप्यंप्रा
प्नोतिचनसंशयः ॥ ३ ॥ इतिगोदायात्रायांपुस्तकदानं ॥ ४ ॥ ॥ छ ॥ ॥६३
॥ श्रीशंवंदे ॥ अथातःसंप्रवक्ष्यामिएकवस्त्रविधानकम् ॥ कुशावर्तेतुयकृत्वावं

68

ग्यैश्चमानवैः ॥ लोकाःकामदुघाःप्राप्तागोदानादनघैश्चिरं ॥ ५८ ॥ इतितेक
थितंराजन्धेनुदानंप्रयत्नतः ॥त्र्यंबकेशप्रीतिकरंकिमन्यत्श्रोतुमिच्छसि ॥ ५९
इतिश्रीगोदा०विवेकाऽदर्शेगोपूजनप्रकरणम् ॥ श्रीत्र्यंबकेश्वरार्पणमस्तु ॥ १ ॥
अथगोदायात्रायांसौभाग्यप्राप्तिकामवायनदानसंकल्पः ॥ देशकालादिसंक
ल्प्य ॥ ममसप्तजन्मसौभाग्यप्राप्त्यर्थंश्रीत्र्यंबकयात्रांगभूतं श्रीगंगागौरीप्रीत
येवायनदानानिकरिष्ये ॥ इतिसंकल्प्य ॥ शूर्पंकंवस्त्रपात्रफलतांबूलदक्षिणापूर्व
कअलंकाराणिधारयित्वाद्रव्यस्थदेवतांपूजयेत् ॥ पश्चात्श्रीगोदावर्याःतीर्थेवा
मूर्तिंसंपूज्य ॥ स्वपल्लवैःशूर्पकमाच्छाद्य॥ तत्रमंत्रः ॥ वायनंप्रतिगृह्णातिवायनं
वैददातिच ॥ वायनंतारकोभाभ्यांवायनायनमोनमः॥ इदंसुवासिनीभ्योवायन-
दानंप्रतिगृह्यतां ० ॥प्रतिगृह्णामि ॥ ततःसुवासिन्यैसौभाग्यद्रव्यैःसंपूज्यहस्ते
जलंक्षिपेत् ॥ शक्त्यनुसारेणदानस्योपरिदक्षिणादेया ॥ सांगतासिध्यर्थंआ
...पूजनंच ॥ इतिगोदायात्रायां सौभाग्यवायनप्रकरणम् ॥ २ ॥ अथघृतकुंभ

र्ववेदविदः शांताःसर्वलोकेषुपूजिताः ॥ पापयध्वंसदासर्वेमहापातकिनोवयं ॥
१२ ॥ आत्मदेहस्यशुध्यर्थंपुत्रसंतानहेतवे ॥ धारयामोनवंवस्त्रंअनुज्ञांदातुमर्ह
थ ॥१३॥ ततोवस्त्रंनवीनंतुप्रणमोच्चार्यभक्तितः ॥मंत्रराजंमहापुण्यंप्रतिपूज्ययथा
विधि ॥ १४ ॥ सीतवायोः सुसंत्राणंलज्जायाः रक्षणंपरं ॥ देहालंकरणंवासः
त्वरयाचधृत्तंतदा ॥ १५ ॥ पत्न्याधार्यंतुपूर्वार्धंउत्तरार्धंवरेणतु ॥ ततोधरांतुसंपूज्य
तस्यांशूर्पंविधायच ॥ १६ ॥ संपूज्यगंधपुष्पाद्यैरुपचारैर्यथाक्रमं ॥ वंशोवंशक
रःश्रेष्टोब्रम्हणानिर्मितः पुरा ॥ १७ ॥ ममवंशस्यविस्तारंकुरुवंशसमुद्भव ॥ इति
मंत्रेणसंप्रार्थ्यगोधूमांश्चविनिक्षिपेत् ॥ १८ ॥ फलानिपंचरत्नानिप्रक्षिपेदोष
धीर्दश ॥ नारिकेरंचजंबीरंक्रमुकंकदलीफलं ॥ १९ ॥ खर्जूरपंचमुख्यानिदाडिमं
चविशेषतः ॥ अन्यानिचयथालाभंप्रियालद्राक्षजानिच ॥ २० ॥ नागवल्लि
दलान्यैवएलाजातिफलानिच ॥ एतान्निक्षिप्यवैशूर्पेप्रयोगचंततःपटेत् ॥ २१॥
॥ ततस्तुप्रार्थयेत्तीर्थेवरुणंचजलेश्वरं ॥ प्रत्यगाशापतेराजन्जलानामधि



69

ध्यादोषात्प्रमुच्यते ॥ १ ॥ एकवस्त्रीस्नानमिदंकथंकार्यंसमासतः ॥ विधानंवद
मेतातदोषघ्नंतोषदायकं॥२॥ शिवउवाच ॥ शृणुष्वान्यतमंपुत्र विधानंविधिपूर्वकम्
॥ स्त्रीपुंसोरेकवस्त्रेणस्नानदानंसुतप्रदं ॥ ३ ॥ अथदोषान्समासेनकथयामिशृणु
ष्वतान् ॥ मुकोंधोवधिरस्तब्दः पंगुकुब्जोनपूंसकः ॥ ४ ॥ कुष्टीरोगीआपस्मारीदश
दोषाप्रकीर्तिताः॥कृत्वेकवस्त्रविधिनास्नानंपिप्पलसंनिधौ॥५॥विमुक्तसर्वपापेभ्यो
वांछितार्थंलभंतिते ॥ तथैववंध्यतांदोषान्मुक्ताःसद्योभवंतिते ॥ ६ ॥ स्कंदउवा
च ॥ वंध्यास्त्रीकथमाख्यातातत्सर्वंविस्तरेणमां ॥ वदस्वशंभोलोकानांहितायम
मरोचते ॥ ७ ॥ चतुर्विधासमाख्यातावंध्यासंताननाशिनी ॥ नाम्नांवदंतितां
जायांवंध्याख्यांपापरूपिणीं ॥ ८ ॥ काकवंध्वासमाख्याताद्वितीयास्त्रीप्रसूर्मता
॥ मृतापत्त्यात्तृतीयातुचतुर्थीकेवलामता ॥ ९ ॥ चतुर्दोषापनुत्यर्थंस्नानंकार्यंत
यासह ॥ कुशावर्तेप्रभातेचभानुवारेचपर्वसु ॥ १० ॥ सभार्यः स्वगुरुंनत्वाती
र्थंकृत्वाप्रदक्षिणं ॥ ततस्तुब्राम्हणान्भक्त्यासंप्रार्थ्यस्तुतिमारभेत् ॥ ११ ॥ स

मासाद्यपदंगच्छतिनिर्मलम् ॥ इतितेकथितंपुत्रकिमन्यत्श्रोतुमिच्छसि ॥ ३४
इतिश्रीगोदायात्राविवकादर्शेएकवल्लीविधानप्रकरणं ॥ ॥ छ ॥ छ ॥
अथगोदोत्पत्तिः ॥ स्कांदेक्षेत्रमाहात्म्ये ॥ कृतेलक्षद्वयातीतेमांधातरिकेश प्र
ति ॥ कूर्मेचैवावतारेचसिंहस्थेचबृहस्पतौ ॥ १ ॥ माघमासेसितेपक्षेदशम्यांइंदु
वासरे ॥ ब्रम्हाद्रेःशिखराद्गोदाप्रादुरासमहासती ॥ २ ॥ कुशावर्तेसमागत्यपूर्व
सागरमाययौ ॥ अतःसर्वेषुकालेषुसिंहस्थोत्रविशिष्यते ॥ ३ ॥ (३६९२९८५)
उत्पत्तिसंख्याप्रमाणं ॥ (शक १८०६ पर्यंतं) ॥ सिंहस्थमहात्म्येगोदोत्पत्तिः ॥
गतेकृतेद्विलक्षेचमांधातारिशकेसति ॥ धातृब्देकौशिकजनेतथासिंहास्थितेगुरौ ॥४
॥ माघशुक्लदशम्यांतुमाध्यान्हेसौम्यवासरे ॥ गंगासमागताभूमौगौतमप्रार्थि
तासति ॥ ५ ॥ तथैवशिवरहस्येचतुर्थांशेअष्टादशाध्यायेश्रीगोदोत्पत्तिः ॥
तदातत्प्रार्थनायोगात्स्वजटामूलतोहर : विससर्जतदांगंगागौतमीनामनामतः ॥
६॥ सप्लावयंतिदेशाद्यैः संस्तुतानिर्गताततः॥गोदावरीवरनदीनंदास्तमुखाब्धिगा



70

पद्मभो ॥ २२ ॥ अघानलप्रसृष्टांगंगर्भंदोहिप्रसीदमे ॥ २३ ॥ यत्कुसंगात्कृ
तंपापंपूर्वेस्मिंश्चेहजन्मनि ॥ तत्प्रमृज्यजलेनाशुगर्भंदेहिप्रसीदमे ॥ २४ ॥ इति
स्नात्वाफलैःपुष्पैःपत्रैर्धान्यैःस्वशक्तितः ॥ शिरस्तःपृष्टभागेचत्याज्यानिजल
सन्निधौ ॥ २५ ॥ शरीरेनौमहादोषायेदोषागर्भमोचकाः ॥ तेसर्वेविलयंयांतुस्ना
नमात्रेणकर्मणा ॥ २६ ॥ येनौकक्षिगतादोषायेदोषागर्भबीजयोः ॥ एकवस्त्रप
रिधानस्नानमात्रेणयांतुते ॥ २७ ॥ इतिस्नात्वारविंध्यात्वापूजयेत्पिप्पलंशिवं ॥
तयोःप्रदक्षणीकृत्यस्तोत्रमेतदुदीरयेत् ॥२८॥ रवेदेवत्रिलोकेशयथाद्यौगर्भिणीत्व
या॥तथामांदेवदेवेशसंततिंदेहिभास्कर ॥२९॥ लक्ष्मीपतेत्रिलोकेशत्रिमूर्तेत्रिगुणा
त्मक ॥ गृहाणार्घ्यंमयादत्तंवांछितार्थंप्रयच्छमे ॥३०॥ आचार्यंपूजयेत्पश्चात्दद्यात्
वस्त्रादिकंतथा ॥ अन्यानिपरिधानार्थंतिलकादिकमाचरेत् ॥ ३१ ॥ ततश्चस्वगृ
हंगत्वाब्राह्मणादींश्चभो जयेत् ॥३२॥ श्रीशिवउवाच ॥ एवंयःकुरुतेमर्त्यःसर्वदो
षनिवारणम् ॥ एकवस्त्रीविधानेनस्नानंसंततिदायकम् ॥ ३३ ॥ वांछितार्थंस

स्तावदेवहि ॥ अतःसर्वेषुकालेषुत्र्यंबकोऽत्रविशिष्यते ॥ १६ ॥ इतिगोदायात्रा 
विवेकादर्शेसिंहस्थमहिमाविवरणेगोदाप्राप्तिःद्वादशप्रकरणंसंपूर्णं ॥ १२ ॥ श्रीसां 
बसदाशिवार्पणमस्तु ॥ ॥ ॥ ॥ छ ॥ ॥ छ ॥ ॥ ॥
श्रीविघ्नविनायकंवंदे ॥ अथदशहराविधिः ॥ तस्यार्थः ॥ दशपापानिहरतीतिद
शहरा ॥स्कांदेदशपापानि ॥ अदत्तानामुपादानंहिंसाचैवविधानतः ॥ परदारोप
सेवाचकायिकंत्रिविधंस्मृतं ॥ १ ॥ पारुष्यमनृतंचैवपैशून्यंचापिसर्वतः ॥ अ
संबंधमलापश्चवाङ्मयंस्याच्चतुर्विधं ॥ २ ॥ परद्रव्येष्वभिध्यानंमनसानिष्टचिंत
नं ॥ वितताभिनिवेशश्चमानसंत्रिविधंस्मृतं ॥ ३ ॥ एतानिदशपापानिहरत्वंमम
गोतमी ॥ दशपापहरायस्मात्तस्माद्दशहरास्मृता ॥ ४ ॥ गद्यं ॥ गोदोत्पत्तिः
माघशुक्लदशम्यांपूर्वोक्तवचनैःप्रतिपादनात्तस्यांदशहरोत्सवः ॥ तत्तीरवासिनः
सर्वोशिष्टाःतद्दिनादारभ्य ॥ अद्यावधिपर्यंतंकुर्वंति ॥ ज्येष्ठशुक्लदशम्यांभागीरथ्य 
वतरणवत् ॥ अतएव ॥ हेमाद्रौस्कांदेच ॥ माघेमासेसितेपक्षेदशम्यांबुधसंयु

सिंहसंस्थेसुरगुरौतत्रस्नात्वामहामुनिः॥आर्यापापविनिर्मुक्तःबभूवविजितेंद्रियः॥
७ ॥ देवास्तथान्येमुनयः तत्कालस्नानमास्थिताः ॥ गोदोत्पत्तिरेवश्रीत्र्यंबकेश्व
रस्यस्वैरगतिः ॥ कुशावर्तेस्वारीतिप्रसिद्धा ॥ तस्यप्रमाणंतु ॥ ब्रह्मोत्तरखंडो
यशिवकवचवचनात् ॥ त्र्यंबकःपातुतृतीययामे ॥८॥ अन्यच्च ॥ ऋषयऊचुः॥
गंगाचजलरुपेणकुतोजातावदप्रभो ॥ सुतउवाच ॥ एवंसंप्रार्थितादेवीगोतमेनत
दास्वयम् ॥ ९ ॥ ब्रह्मणश्चगिरेर्मूर्ध्निअवततारसरिद्वरा ॥ गंगाद्वारंचतन्नामप्रसि
द्धमभवत्तदा ॥ १० ॥ कुशावर्तंतदाचक्रेगंगाद्वारादधोगतः ॥ ततःप्रादुरभूत्तत्र
तस्यैवप्रीतयेपुनः ॥ ११ ॥ कुशावर्तंहिविख्यातंतीर्थमासीत्तदुत्तमम् ॥
तत्रस्नातोनरोयस्तुमोक्षायपरिकल्पते ॥ १२ ॥ त्र्यंबकंनामविख्यातं
ज्योतिर्लिंगंचसूत्तमम् ॥ १३ ॥ गौतम्याश्चतटेप्रोक्तंमहापातकनाशनं ॥ स
र्वेऊचुस्तीर्थदेवाःशंकरंलोकशंकरं ॥१४॥ सिंहराशौयदास्याद्वैगुरुःसर्वसुहृत्तमः
॥ तदावयंचसर्वेवंआगमिष्यामित्वांपुनः ॥ १५ ॥ यावत्सिंहेगुरुश्चैवत्रस्थास्याम

न्मनिवाजन्मांतरसमुत्पन्न त्रिविधकायिक चतुर्विधवाचिक त्रिविधमानसिकेति स्कांदोक्तदशविधपातकनिबर्हणपूर्वकत्रयस्त्रिंशत्पितृउद्धारशिवलोकावाप्ति प्राप्त्यर्थं माघशुक्लदशमी बुधवार योगपर्वणि अस्मिन् गोदाशिवोभयात्मकक्षेत्रे श्रीमत्कुशावर्ततीर्थेस्नानं तीर्थपूजनं प्रतिमायाःगंगापूजनं तन्मंत्रजपं तत्कीर्तनश्रवणं तत्रदीपदानं रात्रौ जागराद्युत्सवादिकंच करिष्ये ॥ ततोदशवारंस्नायाद्यथा विधि ॥ नित्यविधितर्पणांतं विधायतीर्थंपूजयित्वा श्रीगंगामूर्तेःपूजनं ॥ तत्रमंत्रः ॥ ॐनमःशिवायै नारायण्यै दशहरायैगंगायैनमःस्वाहा ॥ तत्रध्यानम् ॥ पद्मास्यांपत्रपत्राक्षींपद्मगर्भस्वरूपिणीं ॥ नमस्त्वांपद्मचरणांपद्मासननिवासिनीं ॥ १ ॥ चतुर्भुजांसुधापूर्णकलशद्वयधारिणीं ॥ एवंविधांभगवतींध्यायेन्नारायणींसदा ॥ २ अन्यच्च ॥ आद्यस्वच्छलसद्दुकूलवसनांपद्मासनस्थायिनीं हस्तन्यस्तवराऽभयाब्जकलशां राकेंदुकोटिप्रभां ॥ भास्वद्भूषणगंधमाल्यरुचिरां ॥६९॥ चारुप्रसन्नाननां श्रीगंगादिसमस्ततीर्थनिलयांध्यायामिगोदावरीं ॥ ३ ॥

72

ता ॥ हरतेदशपापानितस्माद्दशहरास्मृता ॥ ५ ॥ तत्रबुधयोगप्रशस्तपरः
योकांश्चित्सरितंप्राप्यदद्यादर्घ्यंतिलोदकं ॥ मुच्यतेदशभिःपापैःसमहापातकोप
मैः॥६॥तत्रैवएतेनापिदशहरोत्सवविधिः॥तस्यशास्त्रार्थः॥माघशुक्लप्रतिपदिगोदो
त्सवप्रारंभःसाप्रतिपदौदकीग्राह्यानत्वमायुक्तानवरात्रप्रतिपदिवप्रतिमायांदेवता
स्थापनात् ॥ एवमेवधर्माब्धौउक्तम् ॥ एवंरामनवम्यामपिपंचधादिनतृतीयभा
गएवमध्यान्हेनिर्णितः ॥ निर्णयसिंधुधर्माब्धिव्रतराजादिग्रंथेषु ॥ तद्वत् ॥ दश
मी शास्त्रार्थेपिगोदोत्सवात्र दिनस्यपंचधाविभागेन तृतीयभागरूप मध्यान्ह
भागएवग्राह्या श्रीगोदादशहरोत्सवे ॥ एवंच दशहरोत्सवे यस्मिन्दिने संपूर्ण
मध्यान्हव्यापिनीसैवग्राह्या ॥ अथाब्धौप्रयोगः ॥ माघशुक्लदशम्यांगोदाव
तारः ॥ साच माध्यान्ह व्यापिनीग्राह्या दिनद्वये तद्व्याप्तौ अधिकयोग
वतीग्राह्या ॥ अत्रक्षेत्रवासिभिः कुशावर्ततीर्थे स्नानादिनित्यविधिंकृ
त्वागोदापूजनंकार्यं ॥ तत्रसंक्षिप्तप्रयोगः ॥ देशकालौसंकीर्त्य ॥ मम एतत् ज

सिनि ॥ ९ ॥ श्रीगोदा०आचमनीयं० ॥ अथपंचामृतस्नानं ॥ पंचमृतंमयानीतं
पयोदधिघृतंमधु ॥ शर्करासहसंयुक्तंस्नानार्थंप्रतिगृह्यतां ॥ १०॥ गोदा०पंचामृ
तस्नानं॥शुद्धोदकं॥ गंडकीयमुनाचैवनर्मदाचसरस्वती ॥ तापीपयोष्णीकावेरीता
भ्यःस्नानार्थमाहृतं ॥ तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां ॥ ११ ॥ श्रीगो
दावर्यैनमः ॥ शुध्योदकस्नानंसमर्पयामि ॥ वस्त्रं ॥ सर्वभूषाधिकेसौम्येलोकलज्जा
निवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां ॥१२ ॥ श्रीगोदा० वस्त्रंसम०
॥ कंचुकीं ॥ गंगेदेविनमस्तुभ्यंनारदोमुनिसंस्तुते ॥ कंचुकींत्वंगृहाणेत्थंसोत्तरीयं
सुरेश्वरी ॥ १३ ॥ श्रीगोदा० कंचुकं० ॥ अलंकाराणि ॥ मांगल्यसूत्रसहितां
भूषांस्वर्णादिनिर्मितां ॥ सिंदूरंकज्जलंचैवगृहाणत्वंहरप्रिये ॥ १४ ॥ ॥ श्रीगो
दा० अलंकारान्समर्पयामि ॥ अथचंदनं ॥ करोमितिलकंमातःभालेस्वर्गतरं
गिणी ॥ कंकुमागरुकस्तूरीचदनंप्रतिगृह्यतां ॥ १५ ॥ अक्षता ॥ आक्षताच 
सुरश्रेष्ठेकुंकुमाक्तासुशोभिता ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वरी ॥ १६॥

ग्रंथांतरेतु ॥ सितमकरनिषण्णां शुभ्रवर्णांत्रिनेत्रां करधृतकलशोद्यत्सोत्पलाभी
त्यभीष्टां ॥ विधिहरिहररूपामिंदुकोटीरजूटां कलितसितदुकूलां जान्हवीतां न
मामि ॥ ४ ॥ एवंगंगामावाह्यनारायणं रूद्रं ब्रह्माणं सूर्यं गौतमं ब्रह्मगिरिंच
नाममंत्रेणाऽवाहयेत् ॥ श्रीगंगागोदायै नारायणरुद्रब्रह्मसूर्यगौतमब्रह्मगिरिस
हितायै नमः ॥ ध्यनंसमर्पयामि ॥ आवाहनं ॥ आगच्छागच्छदेवेशिगंगेस्वर्ग
तरंगिणि ॥ क्रियमाणांमयापूजांगृहाणाऽघविनाशिनी ॥ ५ ॥ श्रीगोदावर्यै०
आवाहनं० ॥ आसनं ॥ नानारत्नसमायुक्तंमुक्ताजालविभूषितं ॥ गृह्यतामास
नंभक्त्यागंगेपापविनाशिनी ॥ ६ ॥ गोदा०आसनंसम० ॥ पाद्यं ॥ तीर्थ्यादि
सर्वतीर्थेभ्यो मयाप्रार्थनयाहृतं ॥ तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां ॥ ७
श्रीगोदा० पाद्यंस० ॥ अथार्घ्यं ॥ नमस्तेदेवदेवेशिनमस्त्रिपथगामिनी ॥ नमस्ते
जन्हुतनयेअर्घ्यंनःप्रीयतामिति ॥ ८ ॥ श्रीगोदावर्यै० अर्घ्यं० आचमनीयं ॥
एलाकंकोलकर्पूरसुरभिस्वादुशीतलं ॥ आचम्यतांजगन्मातः त्र्यंबकाद्रिविहा

न्मनिजन्मनि ॥ २२ ॥ श्रीगोदा० श्रीफलंसम० ॥ नीराजनं ॥ चंद्रादित्यौच
धरणीविद्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यताम् ॥ २३॥
॥ कर्पूरपूरेण० ॥ १ ॥ आर्तिक्यं ॥ जयजयभगवतिगंगे ॥ करुणाब्धितरंगे ॥
तवचरणाशरणागत ॥ ॥ दुरिताऽमयभंगे ॥ जयजय ॥ ध्रु० ॥
त्रैसंध्याक्षेत्रींतवसंभवसुरसरिते ॥ मज्जनमात्रेंपावति ॥ पिशुनहिसुरसरिते ॥
ज्वजीवनरतमानिति ॥ अंत्यनहिसुरसरिते ॥ धन्यब्रह्मणेगौतममुनि ॥ गोवधअ
घहरिते ॥ १ ॥ जयजय ॥ चंचवग्रींधरिखगपति ॥ अहिवर वरउडतां ॥ पावेंपत
नतटींतव ॥ अरिमुखिसांपडतां ॥ पवनस्पर्शेंतुझियां ॥ पावेतोहरिता ॥ होनु
निचतुर्भुजबैसे ॥ तोअहित्यावरतां ॥ २ ॥ जयजय ॥ न्हातामृगमदलावुनि ॥
मृगकुलउद्धरती ॥वलयेंकरिवरवसनें ॥ कीटहिगतिवरिती ॥ लाक्षाकृतआभरण
स्नपनेंतरुतरती ॥ सन्निधज्यांसिघडेस्थिति ॥ धन्यचिअतितरती ॥ ३ ॥ जयज
य ॥ अत्यद्भुतत्वमहिमाचूर्णजलेंभिजवी ॥ वेश्यातांबूलदेता ॥ कामुकजनरिंझ

74

74

श्रीगोदा० अक्षतान्समर्पयामि ॥ सौभाग्यद्रव्यं ॥ कुंकुमंकामुकंद्रव्यंकामना
कामसंभवं ॥ कुंकुमेनार्चितादेविमत:शांतिंप्रयच्छमे ॥ १७॥ अबीरंचगुलालंच
चुवाचंदनमेवच ॥ अबीरेणार्चितादेविमत:शांतिंप्रयच्छमे ॥ १८ ॥ श्रीगोदा०
सौभाग्यद्रव्याणिसम० ॥ अथपुष्पाणि ॥ मालतीचंपकादीनिबिल्वपत्रयुतानि
च ॥ पुष्पाणितुलशीपत्रंभूषार्थंप्रतिगृह्यताम् ॥ १९ ॥ धूपं ० ॥ वनस्पति० ॥
१ ॥ दीपं ॥ आज्यंच० ॥ १ ॥नैवेद्यं०॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं
॥ भक्षभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां ॥ १९ ॥ श्रीगोदा० ॥ नैवेद्यंसमं ॥ म
ध्येपानीयं ॥ उत्तरापोशानं ॥ करोद्वर्तनं ॥ तांबूलं ॥ पूगीफलंमहद्दिव्यंनागवल्ली
दलैर्युतं ॥ कर्पुरैलासमायुक्तंतांबूलंप्रतिगृह्यताम् ॥ २० ॥श्रीगंगायै० पूगीफ
लतांबूलंसम० ॥ दक्षिणा ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपु
ण्यफलदमतःशांतिंप्रयच्छमे ॥ २१ ॥ श्रीगंगांसुवर्णपुष्पदक्षिणांसमर्पयामि ॥
अथफलानि ॥ इदंफलंमयादेविस्थापितंपुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्ज

मेभक्तवत्सले ॥ सर्वलोकनुतेदेविदयांकुरुशिवप्रिये ॥ २७ ॥ पूजाछिद्रंजपछिद्रं
यच्छिद्रंव्रतकर्मणि ॥ तत्सर्वंत्वत्प्रसादेनसंपूर्णंजायतांमम ॥ २८ ॥ पूजितात्वंय
थाशक्त्यानमस्तेजगदीश्वरी ॥ ऐहिकामुष्मिकींदेविकार्यशिद्धिंददस्वमे ॥ २९
॥ मंत्रहीनं० ॥ एतानि० ॥ श्रीगोदावरीप्रियतां ॥ अत्रपूजायांदशविधपुष्पै ॥ दशां
गधूपेन ॥ दशविधनैवेद्यैः ॥ दशफलैश्चप्रपूजयेत् ॥ ततोदशगाः दद्यात् ॥ एवंदश
दीपा ; प्रवाहयेत् ॥ दशब्राह्मणाःदशसुवाशिनींश्चभोजयेत् ॥ एवंप्रतिपदि
नदारभ्यदशम्यंतःस्नानपूजादीपाद्युत्सवः कार्यः ॥ तीरवासिभिः ॥ वाद्यंगी
तंसायंपुजानीराजनपुष्पांजलिस्तोत्रजागरादिपुरःसरं ॥ तत्रगंगास्तोत्रं ॥ मनो
वाक्कायजैर्दोषैर्दुष्टोबहुविधैरपि ॥ वीक्ष्यगंगांभवेत्पूतःपूरुषोनात्रसंशयः ॥ १ ॥
कृतेसर्वत्रतीर्थानित्रेतायांपुष्करंपरं ॥ द्वापरेतुकुरुक्षेत्रंकलौगंगैवकेवलं ॥ २ ॥ क
लौकलुषचित्तानांपरद्रव्यरतात्मनां ॥ विधिहीनक्रियाणांचगतिर्गंगांविनानहि ॥
३ ॥ किमष्टांगेनयोगेनकिंतपोभिःकिमध्वरैः ॥ वासएवहिगंगायांब्रह्मज्ञानस्य

री ॥ संसर्गेयानिंवसे ॥ गिरिपतिसमसजवी ॥ शिवगणशिवपदिनेतों ॥ विबुधग
णाखिजवी ॥ ४ ॥ जय० ॥ कृष्णकविह्मणेअनादिनिं ॥ पातकिजनसारे ॥ इ
च्छितिवंदनमज्जन ॥ हेजगदाधारे ॥ उररीकरुनीराजन ॥ गौतमिनिर्धारें ॥ त्रि
जगत्पावनिसदये ॥ भक्तसहाकारे ॥ ५ ॥ जयजयभगवतिगंगे ॥ करुणान्वित
रंगे ॥ त०शरणागत ॥ दुरितामयभंगे ॥ ध्र. ॥ दुर्गंदुर्घटवारी ॥ १ ॥ श्रीगोदा
वर्यैनमः ॥ आरार्तिकदीपंसमर्पयामिअथपुष्पांजलि ॥ नमस्कारः ॥ नमः
सर्वहितार्थायैजगदाधारमूर्तये ॥ साष्टांगोऽयंप्रणामस्तेप्रयत्नेनमयाकृतः ॥
॥ २४ ॥ श्रीगोदा० पुष्पांजलिपूर्वकनमस्कारान्सम० ॥ विशेषअर्घ्यं
॥ विष्णुपादाब्जसंभूते ॥ गंगात्रिपथगामिनी ॥ गृहाणार्घ्यंमयादत्तंफल
पुष्पसमान्वितं ॥ २५ ॥ श्रीगंगायै०विशेषअर्घ्यंसमर्प० ॥ अथप्रार्थना ॥
॥ ॐनमोनारायण्यै०गोदावर्यैनमस्स्वाहा ॥ शरणंवःप्रपन्नास्मोकुरुध्वांचदयांपु
नः ॥ प्रसन्नाभवभीतस्याभिन्नचर्यव्रतस्यच ॥ २६ ॥ कुरुप्रसादात्संपूर्णांयात्रां

सात्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ ३३ ॥ अ
स्तिविख्यातमतुलंपापाब्धौतरणंपरं ॥ गोदावरीतिविख्यातंशंभुनास्वीकृतंपुरा ॥
३४ ॥ ब्रह्माद्रिशिखराज्जातंतीर्थानामुत्तमोत्तमं ॥ शतयोजनविस्तीर्णंपूर्वसागर
गंशुभं ॥३५ ॥ स्थलेस्थलेदशम्यांतुउत्सवोप्यधिकोमतः ॥ तथापिमूलमध्यांतेऋ
षिभिःपरिगीयते ॥ ३६ ॥ भविष्योत्तरेतु ॥ तटेगोदावरीरम्येहेम्नारौप्येणवात
था ॥ गोदायाःप्रतिमांकृत्वावक्षमाणस्वरूपिणीं ॥ ३७ ॥ संस्थाप्यपूजयेद्देवीं
तदलाभेमृतापिवा ॥ गंधपुष्पादिभिःसम्यक्यथाशक्तिःप्रपूजयेत् ॥ ३८ ॥ गंगा
यांप्रक्षिपादाज्यदीपांश्चैवप्रवाहयेत् ॥ काशीखंडेमूलमंत्रउक्तः ॥ नमःशिवायैप्रथ
मंनारायण्यैपदंततः ॥ नमोदशहरायैचगोदायैसततंनमः ॥ १॥ स्वाहांतंप्रणवा
दिश्चभवेद्विंशाक्षरोमनुः ॥ पूजादानंजपोहोमस्तेनैवमनुनास्मृतः ॥ २ ॥ इतिद
शहराविधिः ॥ तथैवपौर्णिमास्यांवाप्रतिपदिप्रक्षाल्यपूजाविधानं ॥ तत्रसंकल्पः
॥ देशकालौसंकीर्त्य ॥ वार्षिकउत्सवांतर्गतस्पर्शास्पर्शदोषनिबर्हणपर्वकश्रीगोदा


॥६१॥

कारणं ॥ ४ ॥ गच्छन् तिष्ठन् जपन् ध्यायन् भुंजन् जागृन् श्वसन् वदन् ॥ य
त्स्मरेत्सततंगंगांसहिमुच्येतबंधनात् ॥ ५ ॥ गंगास्नानार्थमुद्यक्तोमध्यमार्गेमृतो
यदि ॥ गंगास्नानफलंसोपिनवाप्नोतिनसंशयः ॥ ६ ॥ कन्यादानेनयत्पुण्यं
यत्पुण्यंगोन्नदानतः ॥ तत्पुण्यंस्याच्छतगुणंगंगागंडूषपानतः ॥ ७ ॥
चांद्रायणसहस्त्रेषुयत्पुण्यंस्याज्जनार्दन ॥ ततोधिकफलंगंगामृतपानादवाप्नुयात्
॥ ८ ॥ इतिकाशीखंडांतर्गतगंगाष्टकम् ॥ अनंतरंश्रीगंगाप्रीतयेजपोहोमश्च ॥
ॐनमःशिवायैगंगायैनारायण्यैदशहरायैनमस्स्वाहा ॥ पद्यं ॥ त्रयस्त्रिंशच्छतंपू
र्वान्पितॄनथपितामहान् ॥ उद्धरत्येवसंसारात्मंत्रेणानेनपूजिता ॥ ३० ॥ आ
दावादिपितामहस्यनिगमव्यापारपात्रेजलंपश्चात्पन्नगशायिनोभगवतःपादोदकं
पावनं ॥ भूयःशंभुजटाविभूषणमणिर्जन्होर्महर्षेरियंकन्याकल्मषनाशिनीभगव
तीगोदावरीदृश्यते ॥ ३१ ॥ सप्ताहवासाद्यमुनाऽघहंत्रीरेवास्सदातोयदृशांनिशासु
॥ भागीरथीदर्शनतस्मृतयंगोदावरीपापहरीजनानां ॥ ३२ ॥ गंगागंगेतियोब्रू

मस्थं ॥ ६ ॥ यांचंद्रशेखरशिरोधिकृताधिवासाब्रह्माद्रिगोपिततनूरासिरोधयुक्ता
॥ कोपंत्यजाथविमलानूस्वजलप्रवाहानूभातःप्रकाश्यचलसागरेमवनूनं ॥ ७ ॥
भवांबुधिप्राप्तमहाभयानांभूदेववृंदारककिन्नराणां ॥ गोदावरीदर्शनलालसानांत्व
द्दर्शनंदेहिनिजंभवानि.।८॥इतिश्रीपद्मपुराणांतर्गतगौतमीस्तोत्रं॥इतिस्तोत्रंकृत्वा
तत्रैवभक्तवर्यैःप्रसादंगृहीत्वाशक्त्यनुसारेणब्राह्मणानूभोजयेत्॥इतिश्रीगोदायात्रा
विवेकादर्शेदशहराविधित्रयोदशप्रकरणम् ॥ १३ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥
॥ श्रीशंवंदे ॥ महापूजाप्रकर्तव्याचरमेदिवसेनृप ॥एकादशर्त्विजः कार्यास्तिचरुद्र
विदःस्मृताः ॥ १ ॥ यःसप्तजन्मार्जितपुण्यभागूभवेत्तस्यैवधीत्र्यंबकपूजनाय॥
गृण्हातितस्यैवकरस्थपूजांश्रीत्र्यंबकोपिस्वयमेवसाक्षात् ॥ २ ॥ तद्दर्शनेचैवफलं
तुराजनूप्रत्यक्षमेतत्कथयामितुभ्यं ॥ अहंपुराजन्मनिहिंसकानांकुलोद्भवःपापर
तःसदैव ॥ ३ ॥ यदृच्छयात्र्यंबकराजगेहंगतःकदाचितूस्वकरेणतस्य ॥ पूजांस
मादायधनाभिलाषीपुनस्तदावाक्षिपदस्यमूर्ध्नि ॥ ४ ॥ निवृत्तसर्वार्थबहिप्रासा

प्रीतयेप्रक्षालनपूजनंकरिष्ये ॥ आदौपंचगव्येनस्नापयेत् ॥ अनंतरंदुग्धाभिषेक पूर्वकसर्वोपचारैःसंपूज्य ॥ ततःगोदाप्रार्थनास्तोत्रं ॥यांमुक्तयेमुनिजनाःसततंभजं तियापावनायजगतांविहिताविधात्रा॥ यन्नीरमेवमतिमत्सुखरूपमस्तिसात्वंप्रसी दशरणाधिगतायमर्त्यं ॥ १ ॥ यस्याप्रसादमधिगम्यपुराविधात्राविश्वंचकारपव नादिविचित्ररूपं ॥ भोस्वर्णदित्रिपथगामिनिदेवपूज्येसात्वंप्रसीदशरणाधिगताय मर्त्यं ॥ २ ॥ यस्याश्चरित्रमनिशंप्रवदंतिवेदाःपौराणिकाःप्रतिदिनंनुकृतंस्तुवं ति ॥ गायंतिकिन्नरगणाःसुरसिद्धसाध्याःसात्वंप्रसीदशरणाधिगतायमर्त्यं ॥ ३ ॥ यत्तीरमेत्यकलिकल्मषकारिणोपिदोषंविहायरविमंडलचारुदेहाः ॥ स्वर्गंप्र यांतिशशिसुंदरपुष्पकस्थाःसात्वंप्रसीदशरणाधिगतायमर्त्यं ॥ ४ ॥ यत्तीरनीरम हिमापिहरेर्हरस्यज्ञानेविधेरपिकदापिनगोचरस्यात् ॥ गंगेतरंगतरुणार्कनिभाव शोभेसात्वंप्रसीद० ॥ ५ ॥ यत्तीरनीरनिकरेषुनराःस्वजीवान्मोक्ष्यंतितेनहिपु नर्विचरंतिमुक्ताः ॥ संसारसागरगुहासुनिरंतरास्युःसात्वंप्रसीदशरणाधिगताय

ममहादेवपरात्पर ॥ पाद्यंगृहाणमद्दत्तंपार्वतीसहितेश्वर ॥ ६ ॥ पाद्यं ॥ त्र्यंबके
शसंद्राचारजगदादिविधायक ॥ अर्घ्यंगृहाणदेवेशसांबसर्वार्थदायक ॥ ७ ॥ अ
र्घ्यं ॥ त्रिपुरांतकदीनार्तिनाशश्रीकंठशाश्वत ॥ गृहाणाचमनीयंचपवित्रोदकक
ल्पितं ॥ ८ ॥ आचमनीयं ॥ क्षीरमाज्यंदधिमधुशर्कराचामृतंपयः ॥ प्रकल्पितं
मयोमेशगृहणेदंजगत्पते ॥ ८ ॥ पंचामृतं ॥ गंगागोदावरीरेवापयोष्णीयमुनात
था ॥ सरस्वत्यादितीर्थानिस्नानार्थंप्रतिगृह्यतां ॥ ९ ॥ श्रीत्र्यं० ॥ अथरुद्रैका
दशनीप्रकारः ॥ यद्वक्षंषट्शिवाख्यंशशिधरशिरसंपौरुषंचात्रसूक्तंचाब्धिःसद्भिस
चडाऽप्रतिरथकवचंसप्तदिगृक्रद्ॣमितंस्यात् ॥ मैत्रंसूक्तंचनेत्रंदशमुनिरधिकंशांभवं
षोडशाख्यंशत्रोर्घातायशस्त्रंनमचमकवपुःमंत्ररूपोहिरुद्रः ॥ १ ॥ सांऽगमाद्यंज
पेद्रुद्रंकेवलानिनवांतरे ॥ सांगंसशीर्षकंचांतेनिरंगमितिकेचन ॥ २ ॥ नमकंचम
कंचैवपुरुषोक्तंतथैवच ॥ नित्यंत्रयंप्रयुंजानोब्रह्मलोकेमहीयते ॥ ३ ॥ रोगवान्
पापवांश्चैवरुद्रंजप्त्वाजितेंद्रियः ॥ रोगात्पापात्प्रमुक्तोसावतुलंसुखमश्नते ॥ ४

78

नरतावत्पुरस्तादभवत्करेणुः ॥ सामद्रलेचाक्षिपदाशुमालामवंतिकाराजपदंमया
सं ॥ ५ ॥ संक्षपभोगांश्चमनेप्सितांश्चविमानमारुह्यदिवंप्रयातः ॥ धुरिस्थिता
हंकिलकिन्नराणांनंदीतिमेनामशिवश्चकार ॥ ६ ॥ इत्थंशिवार्चामहिमानवकुंकः
शक्तिमान्भवेत् ॥ करसंस्थितनिर्माल्यदानान्नीचोपितारितः ॥ ७ ॥ स्कंदउवा
च ॥ शृणुष्वविप्रेंद्रमहेश्वरस्यपूजाविधानंपरमेवविद्वान् ॥ श्रद्धान्वितःस्मार्तवि
धिंविधायस्वसूत्रमार्गेणयथोक्तकाले ॥ १ ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभं
चारुचंद्रावतंसंरत्नाकल्पोज्वलांगंपरशुमृगवराऽभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमं
तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रि
नेत्रं ॥ २ ॥ इतिध्यानं ॥ आयाहिभगवन्शंभोशर्वत्वंगिरिजापते ॥ प्रसन्नोभव
देवेशनमस्तुभ्यंहिशंकर ॥ ३ ॥ त्रिपुरांतकरंदेवंचंद्रचूडंमहाद्युतिं ॥ नागचर्मप
रीधानंसोममावाहयाम्यहं ॥४॥ आवाहनं ॥ विश्वेश्वरमहादेवराजराजेश्वरप्रि
य ॥ आसनंदिव्यमीशानदास्येहंतुभ्यमीश्वर ॥ ५ ॥ आसनं ॥ महादेवमहेशा

स्त्राब्दानिसंयमी ॥ गवांकोटिप्रदानंयःकरोतिविधिवद्गुरौ ॥ १५ ॥ नसतत्फल
माप्नोतियत्सकृत्रुद्रजापिनः ॥ रुद्रेभ्योस्त्वपरंनास्तिजपोध्यानंहुतंनृपः ॥१६
॥ अनपत्यादिदोषेषुशाकिन्यादिग्रहेषुच ॥ सर्वज्वरविनाशायरुद्रजाप्येनसंशयः
॥ १७ ॥ इतिरुद्रैकादशनीप्रकरणं ॥श्लो० ॥ पूंसूक्तपंचाक्षररुद्रमंत्रैर्दत्वापुनश्चा
चमनंपुरारेः ॥ संस्थाप्यचित्रासनमीश्वरायवस्त्रोपवीतेचविभूषणानि ॥ १०
वस्त्राणिपट्टकूलानिविचित्राणिनवानिच ॥ मयानीतानिदेवेशप्रसन्नोभवशंकर ॥
११ ॥ वस्त्रं॥ सौवर्णंराजतंताम्रंकार्पासस्यतथैवच ॥ उपवीतंमयादत्तंप्रीत्यर्थंप्र
तिगृह्यतां॥ १२॥उपवीतं॥सर्वेश्वरजगद्वंद्यदिव्यासनसमन्वितं ॥ गंधंगृहाणदेवे
शचंदनंप्रतिगृह्यताम् ॥ १३ ॥ गंधं ॥ गंधोपरिशुक्लाक्षतान् ॥ अक्षताश्चसुर
श्रेष्ठाःशुभ्राधूताश्चनिर्मलाः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ १४ ॥
आक्षतान् ॥ माल्यादीनिसु०पुष्पाणि० ॥ त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रियायु
धं ॥ त्रिजन्मपापसंहारंएकबिल्वंशिवार्पणं ॥ १५ ॥ बिल्वपत्रंसुवर्णेनत्रिशूल

॥ यश्चसागरपर्यंतांदद्यात्भूमिंसकांचनां ॥ तस्मादप्यधिकंतस्यसकृद्रुद्रजपाद्भवे
त् ॥ ५ ॥ एकादशानुवाकैश्चवारंवारंपृथक्पृथक् ॥ अन्वहंकुरुतेपूजांसशिवःपर
मोहिसः ॥६॥ सर्वेषुग्रहदोषेषुतथादुस्वप्नदर्शने ॥ जपेद्रुद्रान्सकृत्विप्रःसर्वदोषैप्र
मुच्यते ॥ ७ ॥ रुद्रैकादशनीत्त्वेपासर्वकामफलप्रदा ॥ सर्वपापक्षयकरीसर्वशांति
प्रदायिनी ॥ ८ ॥ षडंगेकादशीरुद्रोरुद्रैकादशरुद्रतः ॥ एकादशभिरेताभिर्म
हारूद्रश्चकथ्यते ॥ ९ ॥ एकादशमहारुद्रैरतिरुद्रइतीरितः ॥ रुद्राभिषेकंकुर्वंति
तेषांपुण्यफलंशृणु ॥ १० ॥ भागीरथ्यास्तटेतिष्टन्द्वादशाब्दव्रतंचरेत् ॥ सय
त्फलमवाप्नोतितत्पुण्यंतवकीर्तितं ॥११॥ माघेप्रातर्नरस्नात्वाप्रयागेयत्फलंभवेत्
॥ सयत्फलमवाप्नोतितत्त्पुण्यंतस्यकीर्तितं ॥ १२ ॥ रुद्राणांचयथाजाप्यंसर्वाघौ
घनिषूदनं ॥ सर्वकामकरोहोमस्तथासर्वत्रशांतिदः ॥ १३ ॥ यश्चत्वयायुतोनि
त्यंशतरूद्रीयमभ्यसेत् ॥ स्वर्णस्तेयात्सुरापानात्दुष्कृताऽचरणात्तथा ॥ मुच्यते
व्रह्महत्यायाइतिकैवल्यशाखिनः ॥ १४ ॥ वायुपुराणे ॥ तपस्तपतियोत्यर्थंसह

 

न)दैत्यविनाशनपुरुषं ॥ हेमाचलधनुषं ॥ निजपदभक्तद्वेषकसमुदायेसरुषं ॥
स्थावरजंगमजनुषं ॥ सकलाऽघक्रमुषं ॥ प्रणमोवारंवारं ॥ देवंतत्पुरुषं ॥ ३ ॥
ज्योतिर्लिंगवरिष्टंत्र्यंबकपुरनिष्टं ॥ हिमगिरिदुहितुश्रेष्ठं ॥ कुलदैवतमिष्टं ॥ स्तौ
मित्वामहमीशं ॥ त्र्यंबकहरनित्यं ॥ पालयसंसारान्मां ॥ विस्मृतसत्कृत्यं ॥४॥
मायाजालंत्रोटय ॥ मोटयजनिमरणे ॥ शोपयवृजिनांभोधिं ॥ पुरहरमृगपाणे ॥
स्वीकुरुनीरजनमिदमनुकंपासिंधो ॥ नाशयदुखमशेषं ॥ दीनाऽवनबंधो ॥ ५ ॥
संसारानलतापात्पग्निः परितप्तं ॥षडरिपुवृश्चिकसंकुलशयनांतःसुप्तं ॥शश्वत्गृहसु
तवनिताद्रविणादिषुसक्तं ॥ तारयगंगाधरमां, पत्कजयुगभक्तं ॥६॥ जयजयत्र्यंब
कभगवन्जयगिरिजाजाने ॥ स्तोत्रंकर्तुमहंतेनहिकिंचिज्जाने ॥धु०॥श्लो०॥कर्पूरपू
रेण०॥१॥हेतवेजगतामेवसंसारार्णवसेतवे ॥ प्रभवेसर्वविद्यानांशंभवेगुरवेनमः॥
२०॥ कर्पूरगौरंकरुणावतारंसंसारसारंभुजगेंद्रहारं ॥ सदावसंतंत्हृदयारविंदेभवं
भवानीसहितंनमामि ॥२१॥ नमस्कारः ॥ हराये श्रीसखिलाऽधारनिराधारनिराश्र



80

कारमेवच ॥ मयार्पितंतुतच्छंभोबिल्वपत्रंगृहाणमे ॥ १६॥ बिल्वपत्रंस०॥ वनस्पती
तिधूपं॥आज्यंचेतिदीपं० ॥ १॥ अपूपानिचपकानिमंडकावटकानिच॥ पायसंसूप
मन्नंचनैवेद्यंप्रतिगृह्यतां ॥ १७॥ नैवेद्यं० ॥ मध्येपानीयं०॥करोद्वर्तनं॥ कूष्मांडंमातु
लिंगंचनारीकेरफलानिच ॥ गृहाणपार्वतीकांतत्र्यंबकप्रतिगृह्यताम् ॥ १८॥ फलं॥
॥पूगीफलमितितांबूलं ॥ हिरण्यगर्भेतिदक्षिणां ॥ अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिर्ना
रायणोविभुः॥नीराजयामिदेवेशंपंचदीपैःसुरेश्वरं॥१९॥ ॥आर्तिक्यं॥ जयजय
त्र्यंबकभगवन् ॥ जयगिरिजाजाने ॥ (शिव) जयगिरिजाजाने ॥ स्तोत्रंकर्तुंम
हंते ॥ नहिकिंचिज्जाने ॥ ध्रु० ॥ चंद्रालंकृतशिरसं चंद्राऽमलभासं ॥ चंद्राव
ल्लभामजहारोज्वलसरसं ॥ वामांकाहितवामाकृतहृदयोल्हासं ॥ वंदेपशुपति
मीशं ॥ राजतगिरिवासं ॥ १ ॥ (जयजय) ॥ अजमपिसद्योजातं ॥ मृडमं
डितहस्तं ॥ वामादिमपददेवं ॥ विस्मयकृच्चरितं ॥ रुद्रंभीमम घोरं ॥ खलजन
कृन्तेरं ॥ स्मरहरमीशानाख्यं ॥ नौम्यहमनुवारं ॥ २ ॥ (जयजयत्र्यंबकभगव

नराणांतुलिंगार्चनरतात्मनां ॥ शुद्धस्फटिकसंकाशाःशिवलोकंव्रजंतिते ॥ ६ ॥
देवत्वंलोकपालत्वंऋषित्वंदानवेशतां ॥ लोकेश्वरत्वमीशत्वंलिंगस्याभ्यर्चनात्
भवेत् ॥ ७ ॥ संसारदुःखकांतारेनिमग्नश्चमहीतले ॥ चक्रवत्भ्रमतेविप्रलिंगार्च
नवर्जितः ॥ ८ ॥ नपूजयंतियेलिंगमिष्टापूर्तादिमोहिताः ॥ योनिकोटिसहस्रेषु
निर्गच्छंतिविशंतिते ॥ ९ ॥ स्वर्गेयज्ञफलंभुक्तादानानांचफलंतथा ॥ तेविशंती
हगर्भेषुलिंगार्चनविवार्जिताः ॥ १० ॥ लिंगार्चनरतानांचगर्भजन्मनविद्यते ॥
गर्भवासभयाद्भीतोलिंगार्चनपरोभवेत् ॥ ११ ॥ गतिर्नजायतेविद्वान्यावल्लिंगं
तुनार्चयेत् ॥ स्नानंजप्यंचसत्यंचनियमाराधनानिच ॥ १२ ॥ शिवलिंगार्च
नस्येहकलान्नार्हंतिषोडशीं ॥ धर्म्यमाचरितंयच्चत्रैलोक्येदिविचस्थितम् ॥ शिव
लिंगार्चनस्यैवचाप्यंशंनचपूरयेत् ॥ १३ ॥ ब्रह्माविष्णुमहेंद्रश्चलोकपालाश्चदे
वताः ॥ विद्याधरागुह्यकाश्चगंधर्वाश्चसकिन्नराः ॥ १४ ॥ राक्षसादानवादैत्या
वसिष्ठाद्यामहर्षयः ॥ लिंगार्चनंप्रकुर्वंतित्रैसंध्याक्षेत्रभूमिषु ॥ १५ ॥ लिंगार्चन





81

य ॥ पुष्पांजलिंगृहाणेदंत्र्यंबकेशनमोस्तुते ॥ २२ ॥ यानिकानिचेतिप्रदक्षिणा ॥
एवंगृहस्थःप्रथमाश्रमीच वनाश्रमी शंकरमादरेण ॥ अभ्यर्चयेदन्वहमंबिकेशं
सदायतिस्तु प्रणवेननित्यम् ॥ २३ ॥ शिवाभिधानेन नमोंतकेन स्त्रियश्चतु
र्थ्या विहितेशपूजा ॥ तेनैवशूद्रस्य तथेतराणां देवालयालोकनवंदनाभ्यां ॥
२४ अखिलनिगमसारं लिंगपूजाप्रकारं भवभयपरिहारं प्राणिनांमुक्तिभाजां ॥
प्रकटितमिहसर्वं लोकरक्षार्थमेतत् चिरसुखकरमीशंपूजयेद्भक्तिपूर्वं ॥२५॥ अथ
श्रीत्र्यंबकेशपुजाफलम् ॥ शृणुविप्रेंद्रवक्ष्यामि लिंगाराधनतःफलं ॥ अर्चितंभक्ति
भावेनदद्यान्मोक्षंनसंशयः ॥ १ ॥ जन्मकोटिसहस्रेषुसंचरंतश्चयोनिषु ॥ सकृ
दभ्यार्चितेलिंगेभुक्तास्युर्घोरबंधनात् ॥ २ ॥ गर्भवासेमहदुःखंयस्त्विदंच्छेत्तुमि
च्छति ॥ सोभ्यर्चयेत्सदालिंगंभक्तिभावेनशंकरं ॥ ३ ॥ वैवस्वतभयंनास्तित
थामरणजन्मयोः ॥ यस्तुपूजयतेनित्यंलिंगंसुरगणार्चितं ॥ ४ ॥ तेजीवंतिनरश्रे
ष्ठाःयेचालिंगार्चनेरताः ॥ नार्चयंतिचयेलिंगंजीवंतोपिमृताश्चते ॥ ५ ॥ कुतःपापं

गो. वि ॥७७॥ यंतिये ॥ २६ ॥ रुद्राभिषेकंकूर्वंतितेषांपुण्यफलंश्रृणु ॥ भागीरथ्यास्तटेतिष्टन्
द्वादशाब्दव्रतंचरेत् ॥ सयत्फलमवाप्नोतितत्पुण्यंतस्यकीर्तितम् ॥ २७ ॥ माघे अ० ॥१३॥
प्रातर्नरस्नात्वाप्रयागेयत्फलंभवेत्॥सयत्फलमवाप्नोतितत्पुण्यं०॥२८॥संतिद्वादश
लिंगानित्र्यंबकादीनिभूतले ॥ तथापित्र्यंबकस्यार्चामहिम्नोंतोनविद्यते ॥ २९ ॥
योदद्याद्यंशिवज्ञानंकुर्याद्वाधर्मदर्शनम् ॥ कृत्स्नांवापृथिवींदद्यात्तेनतुल्यंनतत्फल
म् ॥ ३० ॥ इतिश्रीगोदायात्राविवेकादर्शेश्रीत्र्यंकेश्वरमहापूजाविवरणंचतुर्दश
प्रकरणं ॥ १४ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ छ ॥
॥ श्रीशिवंवंदे ॥ मुनयऊचुः ॥ स्वामिन्विचित्रमाख्यानंवैभवंभुक्तिदायिनः ॥
त्र्यंबकेशस्यपीयूषादपिस्वादुतरंप्रभो ॥ १ ॥ उमाहृदयपीयूषपरमास्वादचंचुर
॥ आनंदाब्धिशिवाऽकारगंगाकल्लोलचालन ॥ २ ॥ श्रुत्वातेनमनोस्माकंसुतृ
प्तिमधिगच्छति ॥ अथभूपःसमाचक्ष्वत्र्यंबकस्यमहोदयम् ॥ ३॥ स्कंदउवाच ॥ ॥७७॥
कदाचित्सुखमासीनंदेवदेवंचत्र्यंबकम् ॥ सनत्कुमारंपप्रच्छमुनिर्नामयतःसुधीः

रतोदेवामनुष्याणांतुकाककथा ॥ लिंगार्चनपरोधर्मोनास्तिनास्तिजगत्त्रये ॥१६
लिंगार्चनात्परंश्रेष्ठंनभूतंनभविष्यति ॥ इत्थंशिवार्चामहिमानंवक्तुंकःशक्तिमान्भ
वेत् ॥ १७ ॥ सुवर्णदक्षिणादेयात्र्यंबकस्यचऋत्विजां ॥ ब्राह्मणान्भोजयेत्पश्चा
त्त्ववित्तशाठ्यंनकारयेत् ॥ १८ ॥ लक्षहोमःप्रकर्तव्यःमहारुद्रस्तथैवच ॥ अतिरुद्रः
प्रकर्तव्यःप्रशस्तेवैभवेसति ॥ १९ ॥ वृषोत्सर्गप्रकर्तव्योदेवद्वारेनराधिप ॥ कुटुं
बिनेवादातव्यंगोयुग्मंचकलौयुगे ॥ २० ॥ गोशतंवासहस्त्रंवाकर्तव्यमथवायुतं ॥
लिंगानिस्थापनीयानिजीर्णोद्धारमथापिवा ॥२१॥ दशदानानिदेयानिमहादाना
निषोडश॥नित्यंअन्नप्रदानानिदीपदानानिनित्यशः ॥२२॥ यतीनामन्नदानानि
तथाविद्यार्थिनामपि ॥ अंधानांचैवपंगूनांबधिराणांदरिद्रिणां ॥ २३ ॥ विधवा
नांचसुवस्त्राणितथैवब्रह्मचारिणां ॥ एवंपूजाविधिंकृत्वाततोगच्छेस्वकंपुरं ॥ २४
ग्रामेपिभोजयेद्विप्रान्त्र्यंबकप्रीतिहेतवे ॥ ग्रामेशंपूजयित्वातुपुनर्ब्राह्मणभोजनम् ॥
२५ ॥ श्रावणेसोमवारेचभूतेकृष्णेनिशामुखे ॥ एकादशीसुकृष्णासुत्र्यंबकंपूज

ऊचुः ॥ आत्मापूर्णोंशेयआमन्यवींहैःशुद्धेशुद्धिःपावनायागभाक्तिः ॥ पुण्यंतीर्थं
नापरंत्र्यंकेशात्तस्मात्सर्वेत्यागवान्तत्रतिष्ठेत् ॥ १९ ॥ स्तोत्राण्यूचुः ॥
यद्रहस्यंपुराणेषुयद्वेदेषुतपःसुच ॥ तदेवमुक्तयेपुंसांत्र्यंबकादपरंनहि ॥ १६ ॥
योगाऊचुः॥ससर्वात्मेक्षणोयोगोमुक्तियोगोमलात्मनां ॥ चित्तशुद्धिर्महायोगस्त
स्त्र्यंबकमुपाश्रयेत् ॥ १७ ॥ यागाऊचुः ॥ अंगहीनावयंकूटंविघ्नानांबहुतत्वतः
॥ त्र्यंबकेवलमस्माकंयेनमुक्तिंवृणीमहे ॥ १८ ॥ ब्रह्मोवाच ॥ स्वयंभुवत्वेकम
दृष्टमन्यैःगुह्यातिगुह्यंपरमंपवित्रम् ॥ शंभोःस्वरूपंचिदनंतशक्तेर्यत्त्रिंबकाख्यंश्रु
तिभिःप्रणीतं ॥ १९ ॥ तदाश्रयात्पावनतांप्रयांतितीर्थान्यनेकानिपुरोहितानि
चराचरंविष्टपमंडलस्थंनित्यंयदीक्षालवमाश्रयेत ॥२०॥ तदेवपुण्यंरुचिरंतदेवभ
वस्यसारंभवपारकारं ॥ ममप्रियंवेदवपुर्यथेदंयत्त्र्यंबकक्षेत्रमतुल्यमिष्टम् ॥ २१
हरिरुवाच॥नयोगैर्यागैर्वानंनिगमपुराणप्रपठनैस्तपोभिःसन्यासैःजडमतिषुमुक्ति
र्नगदिता ॥ यथात्रैसंधीयेशिवदयितरूपेपरतमेतनुत्यागाद्वासादपिसुचरितानांत

॥ ४ ॥ देवदेवजगन्नाथशंभोविद्यानिधेगुरो ॥ किंचिद्विज्ञप्तिकामोऽहंतदाज्ञापयशं
कर ॥ ५ ॥ वदेत्युक्तःशंकरेणप्रत्युत्तरगतोमुनिः ॥ एकंचित्रंमहीपृष्ठेदृश्यतेतत्क
थंवद ॥ ६ ॥ यज्ञानूयोगानूतपस्त्यक्त्वापुरद्वाराणिभूतले ॥ यांतित्र्यंबकशैलेंद्रंद
र्शनायाभितोजनाः ॥ ७ ॥ महादेवेतिरुद्रेतित्र्यंबकेतिहरेतिच ॥ नामभिःकीर्त्यय
त्योऽन्येमुक्ताएवचकासते ॥ ८ ॥ एतत्संदिग्धमनसांरहस्यंनःसमीरय ॥ शंभोत्वत्तो
ऽपरोज्ञाताकोनःसंशयभेद्भवेत् ॥ ९ ॥ इतितेषांमुनीशानांअग्रतोभिहितोपणम्
॥ शशंसस्मितपूर्वंतंबभाषेकृपयाविभुः ॥ १० ॥ श्रीमहादेवउवाच ॥ सत्यंमुने
त्वयाप्रोक्तंपुरातनंतपस्विना ॥ रहस्यंमेतवाख्यातंनपृष्टंकेनचित्क्वचित् ॥ ११
ब्रह्माविष्णुरहंवत्सपुराकैलासशेखरे ॥ लोकानांमुक्तयेकीर्तिंवर्णयंतःसमास्थिताः
॥ १२ ॥ पुराणैर्नियमैस्तोत्रैस्संयोगैःक्रतुभिर्वरैःगविचार्यसुचिरंसर्वेकृतवंतोविनिर्ण
यम् ॥ १३ ॥ पुराणान्यूचुः ॥ ज्ञानंविनानैवमोक्षःकदाचित्चांतःशुध्येतद्ववत्सा
पिपुण्यै ॥ सत्तीर्थेपुण्यात्वतेष्वेवसिध्यैतीर्थंतस्मात्त्र्यंबकंवैश्रयेत ॥ १४ ॥ वेदा

क्षिणंप्रकुरुतेयावज्जीवंयःआत्मवान् ॥ ३१ ॥ सरितांहियथागंगासरसांसाग
रोयथा ॥ देवानांचयथाविष्णुर्यथाहंभगवत्तम ॥ ३२ ॥ आश्रमाणांयथान्यासो
व्रतानामशनच्युतिः ॥ योगानांज्ञानयोगोहिवर्णानांब्राह्मणोयथा ॥ ३३ ॥ योगि
नांत्वंयथासौम्यदेवर्षीणांचनारद ॥ आत्मज्ञानांयथाब्रह्माक्षेत्राणांत्र्यंबकस्तथा
॥ ३४ ॥ नत्र्यंबकाद्रेरपरंसुपीठंनत्र्यंबकाद्रेरपरंसुतीर्थं ॥ नत्र्यंबकेशादप
रंहिलिंगंनत्र्यंबकान्मुक्तिपदंपरंच ॥ ३५ ॥ ध्येयोगेयोदर्शनीयाभिवंद्योमान्यःपू
ज्योधीमताक्षेत्रराजः ॥ धर्मादीनांसारमाप्तुंह्ययत्नात्वांछायस्यस्वात्मलाभेनचा
पि ॥ ३६ ॥ इतित्र्यंबकमाहात्म्यंवर्णितंयोगिनांवर ॥ सर्वैहित्वानिषेवेतमोक्षार्थं
त्र्यंबकोत्तमम् ॥ गोदायात्राविधिःकुत्रकृतःस्यात्पुण्यवर्धनः ॥ इतीच्छतांनृणांभूरि
संदेहद्रुपरश्वधः ॥ ३७ ॥ धारणीत्युपनाम्नायंत्र्यक्षक्षेत्रनिवासिना ॥ शास्त्रैनैपु ॥७१॥
ण्यवित्तेनबाबदेवाख्यसूरिणा ॥ ३८ ॥ पक्षपातंपरित्यज्यग्रंथानालोढ्यसर्वशः ॥
गोदायात्राविवेकाख्यपदार्थोविनिर्मितः ॥ ३९ ॥ ॥ इतिश्रीगोदात्रावि

नुभूतां ॥ २२॥ शिवउवाच ॥ इदंरहस्यंपरमंपवित्रंप्रकाशितंनक्वचिदेतदित्थं ॥ म
मस्वरूपंपरमार्थरूपंआद्यंस्थिरंवेदमयंहिवेतन् ॥२३॥अनेकजन्मार्जितसत्तपोभि
र्व्रतैस्तथाशोगसमाधिदानैः ॥ सक्षीणपापःशिवअच्युतेति रामेतिकृष्णेतिचवाचि
नाम॥२४॥ क्षीणांहसःपुण्यभारैरनेकैर्विमुक्तियोग्याविमलांतराये ॥तेत्र्यंबकेशेव्र
तिनोभवंतितनुस्त्यजास्तत्रनजन्मभाजः ॥२५॥ अतःसर्वंपरित्यज्यत्र्यंबकेनिवसे
त्बुध ॥ त्र्यंबकक्षेत्रयात्रादिफलदामोक्षदानृणां ॥२६॥ माघेप्रयागेयमुनांबुलोलगं
गासुकल्लोलसुधौतदेहाः ॥ साफल्यमायांतिमतिंचराढ्यांतेत्र्यंबकेशुद्धधियोभि
यांति ॥ २७ ॥ माघेतथोजैंप्रतिवर्षमत्रव्रतास्थिरामाधवराधयोश्च ॥ प्रातःप्रातः
स्नानमात्रेषुपुण्येकौशावर्तेनापुनर्जन्मभाजः॥२८॥तन्वंतरंकाशिगतानाप्नुवंतिपुनस्त
था ॥ जीवन्मुक्ताश्चविज्ञेयात्र्यंबकेयेवसंतिहि ॥ २९ ॥ येवाप्नुयात्र्यंबकरा
जयोगंनित्यंनित्यंसद्विज्ञानिनोतेभवंति ॥ यस्माज्ज्ञानात्तांनेर्विकल्पोविमोक्षस्त
स्मात्कोवैनाश्रयेत्तद्गिरिशजं ॥ ३० ॥ सप्तद्वीपवतींपृथ्वींसागरांतांसपर्वतां ॥ प्रद



इतिश्री गोदायात्राविवेकादर्श पूर्वार्द्धं संपूर्ण.

85

वेकादर्शेपंचदशप्रकरणं ॥ १५ ॥ ॥ श्लोक ॥ रसचुनागभूम्याख्यंशकेतारणवत्सरे ॥ भाद्रशुक्लादित्यातिथावंकितोयंशिलाक्षरैः ॥ १ ॥ अस्यांकनप्रयासेनश्रीमान्हरिहरेश्वरः ॥ प्रीयतांप्राणिनांक्षेममस्तुतस्यप्रसादतः ॥२॥ इदंपुस्तकंत्र्यंबकक्षेत्रनिवासिनाधरणेत्युपाभिधाअंबादासात्मजबाबाशास्त्रिणामहत्प्रयासेनविनिर्मितं॥तत्दीक्षितोपाव्हयत्र्यंबकात्मजनारायणशास्त्रिणः सहाय्येनतानपाठकोपनाम्नाराघवेणमुद्रितं॥मुंबापुर्यांआर्यालंकारमुद्रालये॥श्रीत्र्यंबकेश्वरप्रीतोभवतु
हे पुस्तक शके १८०६ चे साली प्रथमच प्रतीची आवृती यास्तव अशुद्ध कित्तेक ठिकाणी राहिलेगेले आहे ते.।बहुतकरूनशुद्धीपत्रांत काढणार तत्रापिसुज्ञवर्यांनी।त्यातीलदोषत्यागकरूनगुणग्राहीयानी त्याकर्त्यांच्याविद्वत्तेकडेस लक्षदेऊन एकेकतरी प्रति संग्रहांतठेविली जावी असी आमची सिफारसआहे ॥ श्रीरस्तु ॥



## यात्रिकाणां सर्वेषां विदुषांच विज्ञप्तिः

अस्मिन् ग्रंथे कियंति प्रकरणान्यवशि ष्टानि तान्युत्तरार्धे दर्शयिष्यामः ॥ कालस्य-अनवकाशत्वात् तथाच श्रीमतां अंकनविषये साह्यकारिणां अनाश्रयत्वाच्च-अनंकितानि॰ परेच कालांतरेण तान्यपि प्रकरणानि स्पष्टी करिष्यामः

तानि प्रकरणानि अधस्ता ल्लिख्यंते-

१ मात्रगया विवरणे- वीरबाहुचरित्रे अहल्योध्दारश्च॰

२ उद्यापनानि

३ अनि क्षेपविधिः

४ तीर्थाधिवासः

५ महापीठचरित्राणि

६ भस्ममहिमा

८ बिल्वमहिमा

९ उमामहेश्वरपूजनं

१० पंचवक्त्रपूजाविधिः

११ उपदेशदीक्षाविवरणं

१२ षडक्षरीमहिमा॰

७ रुद्राक्षमहिमा 13 मुक्तिप्रकरणानि

१४ जीवन्मुक्तस्यलक्षणानि·

इति गोदायात्राविवेकादर्शे उत्तरार्धे प्रकरणानि, समाप्तानि,

87

87